

# वेदान्तशास्त्रमकरन्दः-

श्री १००८ श्रीमत्परमहंसपरिव्राजकाचार्य-योगीन्द्र-
वर्य-श्रीआत्मानन्दसरस्वतीस्वामिभिर्विरचितः ।

सोयं

तद्भक्तवेदान्तवाचस्पतिछोटूमहाराजश्रीमत्पण्डितमाणिकलाल
व्याकरणाचार्यशास्त्रिभ्यां संशोधितः ।

लोकानुग्रहाय स्वेनैव

मुम्बय्यां

श्रीकृष्णदासात्मज-क्षेमराजस्य

स्वकीये "श्रीवेंकटेश्वर" ( स्टीम् ) यन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९७८, शके १८४३.

पुस्तक मिलनेका ठिकाना शेठश्रीचतुर्भुज भवानी
दास गुप्त तांबाकांटा, पायधुनी, बम्बई.

यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली खम्बाटा लेन, स्वकीय "श्रीवेङ्कटेश्वर" स्टीम्-प्रेसमें छापा और श्रीमत्परमहंस परिव्राजकाचार्य योगीन्द्रवर्य श्रीआत्मानंद सरस्वती स्वामीने बम्बईमें प्रसिद्ध किया।

यो ब्रह्माण विदधाति पूर्व । यो वै वेदाँश्च प्रहिणोति तस्मै ।
त ँ हमात्मबुद्धि प्रकाशम् । मुमुक्षुर्वै शरणमह प्रपद्ये ॥



श्रीमत्परमहंसपरिव्राजकाचार्य योगीन्द्रवर्य
श्रीआत्मानन्दसरस्वती स्वामिन. ।

# वेदान्तशास्त्रमकरन्दप्रस्तावना।

"भावना विपरीता या या चासम्भावना शुक।
कुरुते प्रतिबन्धं सा तत्त्वज्ञानस्य नापरा ॥

तन्निवृत्त्युपायः श्रवणादिः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः। यद्यप्यस्य ज्ञानसाधनत्वमवगम्यते तथाप्यप्रमाणत्वेन साक्षात्तदनुपपत्त्या प्रतिप्रतिबन्धादिनिवृत्तिद्वारा महावाक्यात्प्रमोत्पत्तावस्योपयोग इति ज्ञानसाधनत्वमुपपद्यत ततश्च प्रतिबन्धस्यासम्भावनादेरप्रमायामन्तर्भावादवश्यमप्रमा निरूपणीयेत्यतः क्रमप्राप्ता अप्रमा निरूप्यते प्रमात्वावच्छिन्नप्रमाभिन्नं ज्ञानमप्रमेति निष्कर्षस्तेन घटप्रमाभिन्नघटज्ञानेऽतिव्याप्तिर्निरस्ता प्रमात्वं नाम अनधिगतअबाधितविषयार्थज्ञानम्। तस्य यथार्थवेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिकेति व्यवह्रियते तस्यां फलरूपचतुर्थभूमौ सर्वजगदुपादानब्रह्मणो वास्तवं गिरिनद्यादिकं रूपरसादिकं जगन्मायामयं नत्वेतद्वस्तुतोऽस्तीति निश्चिततत्त्वज्ञानम्। ता-

दृशाप्रमेयज्ञानभूमिकाप्राप्ताः ब्रह्मविद्वरिष्ठाः सर्वजगदुपादानब्रह्मनिष्ठाः मोहातुरभ्रमद्वैतभूतवेतालपिशाचिविशिष्टप्रतिवादिभयंकरादिमत्तगजान्कवलीकृत्य गर्जन्ति अद्वैतकेसरिवैदिकाचार्याः निष्कामनिरहंकारनिष्प्रयोजननिर्द्वन्द्वबोधकसप्तमभूमिकांप्राप्ताः पार्श्वस्थबोधिताः सन्तः। "तत्त्वमसि" "अहं ब्रह्मास्मि" "प्रज्ञानं ब्रह्म" "अयमात्मा ब्रह्म" त्यादिमहावाक्यविचारजन्यज्ञानेन द्वैतात्मनिवृत्तौ विवदमानानां विशिष्टाद्वैतमाधवनिम्बार्कादीनां द्वैतवादप्रसक्तानामन्यानामपि जीवब्रह्मैक्यसंशयानिवर्त्तकं तर्कमुदाहृत्यास्मिन्वेदान्तशास्त्रमकरन्दे यानिकानि कपिलगौतमचार्व्वाय नकुमारिलकणादप्रभृतिभ्रमनिष्ठाचारशिष्टविनीतानामपि तत्पदप्रतिपादकवेदान्तशास्त्रप्रातिकूल प्रमाणानि तानि शिष्टकैयटादिभिर्निरासितानि ब्रह्मण्यभिन्ननिमित्तोपादानकारणतया पर्यवसितान्यत्राभिहितानि। अपिच"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" त्यादिवचननिचयप्रामाण्यान्नानाविधभोक्तृभोक्तव्यादिभेदप्रपञ्चस्य ब्रह्मण्यविद्यापरिकल्पितत्वात् मृत्योः स मृत्यु माप्नोति य इह नानेव पश्यति" इत्यादीनि-

न्दाश्रवणेन पारमार्थिकभेदनिराकरणात् "तरति शोकमात्मविदित्या" दिश्रुतिशिरःशतवशेन निर्विशेषब्रह्मात्मैकत्वविद्यया निवृत्तिबोधनात् । "तं त्वौपनिषदं पुरुषं पृच्छामी" त्यादिश्रुत्यात्मन उपनिषदेकगम्यत्वावधारणादेकान्तिकेष्टानिष्टप्राप्तिपरिहारयोरुपायभूतां ब्रह्मविद्यामाम्नायशिरोभूता उपनिषद एव प्रतिपादयन्तीत्यत्र न काचिद्विप्रतिपत्तिः श्रुतेरन्तिमप्रमाणत्वमभ्युपगच्छताम् । कठकोपनिषद्भाष्ये श्रीमच्छङ्करभगवत्पूज्यपादा उपनिषच्छब्दमेवं व्याचिख्युः "सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य रूपमुपनिषदित्युपनिषच्छब्देन च व्याचिख्यासितग्रन्थ प्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते" । मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्तउपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशना दित्यनेनार्थयोगेन विद्योपानिषदित्युच्यते "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति श्रुत्याप्यभिहितत्वात् । पूर्वोक्तसकलार्थप्रतिपादनार्थं ग्रन्थारंभ इति ध्येयमिति शम् ॥

तमीश्वराणां परमं महेश्वरम् ।
तं देवतानां परमञ्च दैवतम् ॥
पतिं पतीनां प्रथमं पुरस्तात् ।
विदाम देवं भुवनेशमीड्यम् ॥ १ ॥

गच्छतः स्खलनं न दोषायेति वाक्यमनुस्मृत्य प्रमादान्मुद्रणदोषाद्वागतान् दोषान्परिष्कृत्य वाचयन्तु निर्मत्सरिणो विद्वांस इत्यभ्यर्थयामः ।





# वेदान्तशास्त्रमकरन्दः ।

श्रीपार्वतीपरमेश्वराभ्यां नमः ।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैय्यायिकाः। अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ १ ॥

परममंगलाचरणरूपया वेदस्य नित्यत्वापौरुषेयत्वसिद्धिसंभावनया कुतर्कदुर्गदुरितध्वांतस्वांतशांतेरुपायभूतपरविद्याद्यपरोक्षज्ञानविधुराणामतिसुलभतया दैवीप्रज्ञासंपत्तय इदमनुमेयत्वाधिकरणमुपक्रम्यते, "शास्त्रयोनित्वादि" त्यनेन सूत्रेण-अत्र प्रथमपक्षे पूर्वसूत्रोक्तजगत्कारणत्वस्यैवोपपादनायास्मान्नित्यसिद्धाद्ब्रह्मणो निःश्वासवदनायासेनैव वेदाः सिध्यंतीत्यभिधीयते तत्र ब्रह्म वेदकारणं न वेति संदेहे वेदस्य नित्यत्वश्रवणात् "देवतां संबोध्येत्यनया वाचा स्तुतिं

प्रेरयेत्" इति श्रुतेः "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इति स्मृतेश्च अतो न वेदकर्तृत्वं ब्रह्मण इति न जगद्योनित्वमिति प्राप्ते ब्रूमः निःश्वसितन्यायेन वेदोत्पत्तिश्रवणात् "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इति सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्याद्ब्रह्मणो वेदजनिं ब्रवीतीति कर्तृत्वं तत एव वेदयोनित्वं सिध्यति एतदनुरोधेन "विरूपनित्यया वाचे" त्याद्युदाहृतश्रुतिस्मृत्योरर्थवादत्वेन प्राशस्त्यबोधकत्वमात्रं न च वेदस्य सकर्तृकत्वे पौरुषेयत्वम्, उपलभ्य विरचितत्वानंगीकारेणैव पौरुषेयत्वनिरासः । अस्य सूत्रस्य द्वितीयवर्णकं ।हि पूर्वसूत्रे जन्मादिकथनेन घटवत् कार्यलिंगकानुमानादिप्रमाणांतरवेद्यत्वं ब्रह्मण इत्याशंका माभूदित्येतदर्थम्, तथाहि–ब्रह्म न मानांतरवेद्यं शास्त्रयोनित्वात् शास्त्रं वेदो योनिः प्रमाणं यस्मिन् तस्य भावः तत्त्वम्–"तत्वौपनिषदं पुरुषं पृच्छामि" इत्युपनिषद्वेद्यत्वप्रतीतेः "नावेदविन्मनुते तं बृहंतम् " इति श्रुत्यां विस्पष्टं मानांतरनिषेधाच्च, तथा च प्रथमवर्णके कार्यलिंगकानुमानगम्यत्वाक्षेपेण संगत्या वेदैकमेयत्वं ब्रह्मण इति राद्धांतयितुं द्वितीयवर्णकावतारः अथैवमुच्यते ब्रह्मणो वेद्यतैव नास्तीत्यप्र-

मेयत्वम् ' यतो वाचो निवर्तंते ' इत्यादिश्रुत्या वाङ्मनोर्निरासेन स्वसंवेद्यत्वप्रतिपादनात् शास्त्रयोनित्वं शास्त्रप्रमाणकत्वं वर्णकांतरं न संपद्यते इति तदापि चिदाभासेनाप्रकाश्यत्ताया एव ' यतो वाचो ' अप्रमेयमित्यादिश्रुतिभिः प्रतिपादितत्वात्स्वसंवेद्यत्वमबाधं परमावरणभंगाय ब्रह्माकारवृत्तिरूपायाः प्रमायाः प्रमाणापेक्षत्वाच्छास्त्रैकप्रमाणकत्वं ब्रह्मण अनाकुलम् । अत्र पूर्वपक्षे मुमुक्षूणां वेदान्तेष्वप्रवृत्तिः फलं । सिद्धांते तु मुमुक्षूणामुपनिषत्सु ब्रह्मज्ञानाय विचारात्मकप्रवृत्तिसिद्धिः फलमिति विवेकः । अथात्रेयमपरा विप्रतिपत्तिः किं वेदांताः कर्मशेषतया ब्रह्मप्रतिपादनपरा उत नित्यशुद्धबुद्धमुक्तब्रह्मपरायणाः अत्र अकर्मशेषब्रह्मपरत्वं वेदांतानामिति सिद्धांतः 'यस्य निःश्वसितं वेदा यो वेदेभ्योखिलं जगत्, निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वर' मित्याम्नानात्, अत्र संसारतारणशक्तिमत्त्वेन विद्यायास्तीर्थरूपता तत्र सकलानात्मवासनामलक्षालने सति महेश्वरस्य प्रकाशनात् विद्यायास्तावत्स्वोत्पत्तौ शास्त्रप्रमाणापेक्षणात् शास्त्रप्रमाणकत्वं ब्रह्मणः स्पष्टमभिधीयते तथा च--तत्त्वमस्यादिमहावाक्यैरुपक्रमोपसंहारादिषड्विधलिंगावधृततात्पर्यैर्भागत्यागलक्षणया अखंडैकरसत्वेन ब्रह्मबोधः।

तदुक्तं भगवत्पूज्यपादैः–'संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः । अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः' इति एतेन वेदांतानां कर्तृदेवतादिप्रतिपादकत्वेनार्थवादत्वमित्यपास्तं मुख्यार्थस्य ब्रह्मणोपरित्यागे मानाभावात् "वर्णमात्रस्य नित्यत्वं वर्णानां संततेरुत । नाद्यः सर्वलये तेषां लयसंभव हेतुतः" इत्यादिभिः प्रमाणैर्वेदानामक्षरत्वप्रमाणानां बाधासंभवात् उत्पत्तिविनाशशालित्वप्रत्ययस्यान्यथासिद्धत्वात्-सोयं गकार इत्यादिप्रत्यभिज्ञाबलान्न वर्णानां क्षणिकत्वं किं तु आकाशादिवन्नित्यत्वमेव तच्च सर्गाद्यकालीनोत्पत्तिमत्त्वं प्रलयकाले विनाशित्वं चेति नाद्वैतश्रुतिविरोधः । अत एव न तत्समुदायात्मकं पदमपि क्षणिकं न च पदसमुदायात्मकं वाक्यमपि क्षणिकम् अथ च तादृशवाक्यसमुदायात्मको वेदोऽपि न क्षणिकः । तथैवोक्तं भगवता सूत्रकारेण " अत एव च नित्यत्वम् " इति आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इत्याद्युक्तरीत्या प्रलयपर्यंतावस्थायित्वं नित्यत्वमिति ' छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत " " अस्य महतो भूतस्य निःश्वसितम् " इत्यादिवेदजनिप्रतिपादकश्रुतीनामविरोधः, अबाधितं च वेदाचार्यत्वे परमेशितुः वेदस्य स्वतःप्रामाण्यं च

न च वेदस्योत्पत्तिविनाशाभ्युपगमे पौरुषेयतया स्वतःप्रामाण्यंव्याहन्येतेति चेत् न पुरुषाधीनोत्पत्तिमत्त्वाभावेनापौरुषेयत्वं "तत्तेजो असृजत तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिश्रुतिभिः कर्तुमकर्तुमन्यथाकर्तुंसमर्थाद्ब्रह्मणो वेदस्याविर्भावमात्रस्य प्रतिपादनात् सजातीयोच्चारणमनपेक्ष्योच्चार्यमाणत्वं हि पौरुषेयत्वम्, ईश्वरस्तु पूर्वपूर्वकल्पीयवेदानुपूर्वी मपेक्ष्यैव सर्गादौ वेदं विरचितवान्; इति वेदस्यापौरुषेयत्वमक्षतमेव, तथा च श्रुतयः "धाता यथापूर्वमकल्पयत्""आहो विद्वानमुं लोकं प्रेत्याकश्चित् समश्नुता ३उ"पुरुषतन्त्रत्वाभावादेव स्वतःप्रामाण्यमप्यव्याहतं वेदस्येत्यलं पल्लवितेन। इह खलु सर्वेषां वेदांतशास्त्रविचारेण तदनुकूलानुमानेन चाज्ञानावरणनिवृत्तिद्वारेण ब्रह्मसाक्षात्कारे सति सकलानर्थनिवृत्तिः परमानंदावाप्तिश्च भवतीति सिद्धांतमाश्रित्यायं ग्रंथः वेदान्तशास्त्रमकरन्दाख्यो व्याख्यारूप आरभ्यते. तत्र तावत् 'अनाद्यनंतम्' 'अजो नित्य' इत्यादिश्रुत्या ब्रह्मणोऽनादिनित्यतया ध्वंसप्रागभावयोरसंभवात् अद्वितीयत्वश्रुत्या ब्रह्मणस्त्रैकालिकसंसर्गाभावस्याप्यसंभवात् तत्रकालत्रयाबाध्ये ब्रह्मणि "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। ऐतदात्म्य-

मिदं सर्वं" "तदनन्यत्वमारंभणशब्दादिभ्यः" इत्यादिश्रुतिसूत्राभ्यां कार्यस्य कारणादव्यतिरेकात्सर्वस्य जगतः कल्पितत्वं निश्चित्य तदपोहेन "अविशिष्टमपर्यायाऽनेकशब्दप्रकाशितम्। एकं वेदांतनिष्णाता अखंडं प्रतिपेदिरे" इति प्रमाणमूर्धन्यश्लोकसूचितमर्थं बुद्धौ संगृह्य "कार्यबोधे यथा चेष्टा लिंगं हर्षादयस्तथा। सिद्धबोधेऽर्थवत्ता च शास्त्रत्वं हितशासनात्" इत्यादिवचनेन उपक्रमोपसंहारादिषड्विधतात्पर्यनिर्णायकलिंगैरद्वितीये ब्रह्मणि निखिलवेदांततात्पर्ये निर्णीते सामान्यतो दृष्टानुमानेन श्रुत्यर्थाबाधितत्वं निश्चित्य स्मृतिविरोधाभावेन हितशासनत्वमंगीकृत्य जिज्ञासाधिकरणेन श्रवणमननाद्यात्मकविचारविधानात् अत्र मननं नाम विचारसामर्थ्यं तच्च मनस्येव संभवति तदा पूर्वपक्षिणां मतेन मनस इंद्रियत्वावगमात्, इंद्रियत्वेनाभिमतस्य मनसो विषयत्वमतींद्रियानिर्गुणब्रह्मणः सर्वथा श्रुतिविरुद्धम्, तथा च श्रुतयः "अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगंधवच्च यत्" "अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" "न संदृशे तिष्ठति रूपमस्य" "न चक्षुषा पश्यति कश्चनैन" मित्याद्याः प्रतिपादयंति चैताः

श्रुतयो रूपरसादिगुणशून्यत्वं तत एव चातींद्रियत्वं ब्रह्मणः तथा च-मनस इंद्रियत्वे निर्गुणातीन्द्रियब्रह्मग्रहणसामर्थ्याभावात् श्रवणोत्तरं मनसा ब्रह्मविषयकमननविधानं सर्वथाऽसंबद्धम् अर्थवद्वा स्यादिति संशयः प्रभवति तत्र मनस इंद्रियत्वेनातींद्रियब्रह्मग्रहणसामर्थ्याभावेन मननविधानं नार्थवदिति पूर्ववादिनां पक्षे प्राप्ते आचार्यास्त्वेवं स्वसिद्धांतं वर्णयंति "इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" "इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः" इत्यादिश्रुतिस्मृतिभिर्मनस इंद्रियेभ्यः पृथक्करणान्मनो नेंद्रियं, नापि वृत्त्युपादानत्वात्करणं मनः पुनः प्रमाणांतरावष्टंभो वादी प्रत्यवतिष्ठते। श्रीमद्भगवद्गीताशास्त्रकृता भगवता मनस इंद्रियत्वमुच्यते "इंद्रियाणां मनश्चास्मि देवानामस्मि वासवः" इत्यत्र इंद्रियाणामिति निर्धारणषष्ठ्या मनस इंद्रियत्वप्रतिज्ञानात् अन्यत्रापि "मन एव मनुष्याणां कारणं बंधमोक्षयोः । बंधाय विषयासक्तं मुक्त्यै निर्विषयं मन" । इत्यादिष्वपि स्पष्टं विषयसंयोगित्वाभिधानात् योगशास्त्रेऽपि "मनःसंकल्पकं ध्यात्वा साक्षिण्यात्मनि बुद्धिमान् । धारयित्वा तदात्मानं धारणा परिकीर्तिता' इत्यत्राभिहितायां धारणायाश्च-

त्तस्य देशवंधात्मकतया किंचिद्देशसंयोगित्वं मनस इत्यनायत्या इंद्रियत्वस्वीकारः संस्कारोद्बोधकनाशान्मनोनाशं वदता भगवता वसिष्ठेन मनस इंद्रियत्वेन परिग्रहात् अकामेनापि भवता मनस इंद्रियत्वमभ्युपेयम् अत्राह । नेंद्रियत्वं मनसः प्रबलश्रुतिप्रमाणविरोधात् तथा च श्रुतिः "मनसश्चेंद्रियाणां च ऐकाग्र्यं परमं तपः" इत्यत्र स्पष्टमिंद्रियेभ्यो मनसः पृथक्करणात् तर्हि मास्तु मनस इंद्रियत्वं वस्तुतः तथापि "अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते" इत्यत्र यथा प्रपंचः ब्रह्मणि असन्नारोप्यते तथा मनस्यपि इंद्रियत्वारोपः किं न स्यादिति चेन्न "आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यत्र स्पष्टमेव मनस आत्मेंद्रियाभिन्नतया प्रतिपादनादिंद्रियत्वारोपप्रतिघातः कथं तर्हि भगवता मनस इंद्रियत्वं प्रतिपाद्यते तथैव हि गीतावचनं परिदृश्यते. "इंद्रियाणां मनश्चास्मि" इति प्रागुक्तमेव तथैव "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यनेन अर्थवत्तया प्रातिपदिकसंज्ञाविधानात् इंद्रियरूपार्थबोधकत्वादेव मनःपदस्य प्रातिपदिकसंज्ञा ततोऽपि मनस इंद्रियत्वावगमः । अन्यच्च–"मनसः परिणामेन वृत्तित्वं याति नान्यथा" इत्यत्र मनस

इंद्रियार्थसंनिकर्ये सति परिणम्यमानत्वाभिधानात्, यथा वा नीरक्षीरयोः सजातीययोः परस्परात्यंतसंयोगो दृश्यते न विजातीययोः नीरघटयोः कदाप्यत्यंतसंयोगो भवन् दृष्टः अतो मनस इंद्रियैः साकमत्यंतयोगात् तज्जातीयमिति इंद्रियं मनः इति पूर्ववादिनः तदन्यत्वात् तदल्पत्वात् तत्संकल्पविकल्पनात् तदाकारेण परिणामित्वाच्च प्रमाणांतरानुपलंभान्मन आत्मा न भवितुमर्हतीति पारिशेष्यादिंद्रिय मन इत्याद्यसत्तर्कजटिलांतरालाभाभाकरनैयायिकादयो भेदवादिनोपरिणामारंभमानिनः क्षणिकविज्ञानवादिनो बौद्धाः परमाणुकारणतावादिनः सर्वे तमस्विनो जंबुकाः तावदेव कलकलायन्ते "न गर्जति महाशक्तिर्यावद्वेदांतकेसरी" वेदांतपरिशीलनजन्यब्रह्मसाक्षात्कारेण केसरीभूता गर्जति अद्वैताचार्याः शंकरभगवत्पूज्यपादादंडिताखिलकदध्वमंडलाः प्रलयीकृताखिलद्वैतवादिनो वेदांतदर्शनभाष्यकाराः अथ च पातंजलयोगदर्शनभाष्यकारा ब्रह्ममीमांसासूत्रप्रणेतारो भगवन्महर्षिबादरायणाचार्याश्च–तथा च प्रस्थानत्रयमौलिभूतश्रीमद्भगवद्गीताशांकरभाष्ययोः प्रतिपादितं भगवता श्रीकृष्णेनभगवत्पूज्यपा-

दाचार्यैश्च "महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥ इंद्रियाणि दशैकं च पंच चेंद्रियगोचरा" इत्यत्र विकचनेत्राभ्यां द्रष्टव्यं-तत्र हि ज्ञानेंद्रियाणि पंच कर्मेन्द्रियाणि पंच मिलित्वा दश इंद्रियाणि एकादशं मनः परिगणितं तथाच तार्किकाद्युक्तं सुखाद्युपलब्धिसाधनमिंद्रियं मन इति त्वसंगतमेव। यानेव निरीश्वरवादिनः कापिलाः सांख्याश्चतुर्विंशतितत्त्वान्याचक्षतेयानेववैशेषिका आत्म गुणान् संगिरंते सर्वेप्येते क्षेत्रधर्मा एव नतु क्षेत्रज्ञस्येति भगवदभिप्रायः। महाभूतादिभेदाभिन्नं धृत्यंतं सर्वमपि क्षेत्रत्वात्क्षेत्रमित्युच्यते "तत्र मनसि नष्टे सति संस्कारोद्बोधके नरविषाणमिव धीवृत्त्यनुदयान्मनो नश्यति" इति भगवता विद्यारण्यस्वामिनाऽप्युक्तं किंच सर्वेन्द्रियप्रवृत्तिषु सर्वत्र प्राथम्येन मन एव नियमेन प्रवर्तते तथा चाहश्रुतिः "सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्" इत्यादि सर्वमप्येतदात्मलक्षणं मनसि संपद्यतेकुतः ध्येयाकाराकारित्वं ध्येयस्वरुपत्वं वा मनसो लक्षणमभ्युपगंतव्यं तथा च पारमर्षाणि ब्रह्ममीमांसासूत्राणि "सर्वत्रप्रसिद्धोपदेशात्" शांडिल्यविद्यायां च "दहर उत्तरेभ्यः" इति दहरविद्यायां च "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्यभवतिसक्रतुंकुर्वीत" "दहरं पुण्डरीकं वेश्म" "तंयथायथोपासते तत्तथै-

विषया कारविकारसंस्कारजनिर हितं यदवाशिष्टंमनः तेनैवब्रह्मसाक्षात्कारो भवति तस्मात्सर्वथाऽसंगता मनस इन्द्रियत्वकल्पनाशुष्कतर्कपटूनां वैशेषिकादीनाम् यतोहि ब्रह्मभावनामंदानामुपासनातारतम्येन फलानि दर्शयन्ति'सार्ष्टिसारूप्यसालोक्यफलानिभवंति''साम्नः सायुज्यतां सालोक्यताश्यति'चैवमाद्याः श्रुतयः ये पुन-र्विवेकवैराग्यशमदमादिषट्कमुमुक्षुताभिधानसाधनच-तुष्टयसंपन्ना विचारक्षमा अधिकारिणस्तेषां श्रोत्रियब्रह्म-निष्ठत्यादिलक्षणदेशिकाचार्यमुखात् तत्त्वमस्यादिमहा-वाक्यश्रवणसंपत्तौ मनननिदिध्यासनाभ्यासपरिपा-कबलान्मनसि पाटवे समुत्पन्ने भ्रमरकीटन्यायेन मनसः ब्रह्माकारता संपद्यते अयमेव च ब्रह्मावस्थानलक्षणो मोक्षः नहीदृशमिन्द्रियाणां सामर्थ्यं यत्तत्तदुपास्याकारे-णावस्थानं ब्रह्माकारेणावस्थानं च । तथा च नेन्द्रियं मन इति सिद्धांतो वज्रलेपायितः।एतदर्थप्रतिपादकाः सहस्रशः श्रुतयः " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः॥मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः।महतः परमव्यक्तमव्यक्तात्पुरुषः परः॥पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" "अनाद्यनंतंमहतः परंध्रुवं निचाय्यतं मृत्युमुखात्प्रमुच्यते" 'सर्वस्यप्रभुमीशानं मत्वा धीरो

नशोचति" इत्याद्याः सन्ति तासुच इन्द्रियेभ्यः अर्थानां पृथक्त्वं अर्थेभ्यश्च मनसः पृथक्त्वमितः सुस्पष्टं मनसोऽनिन्द्रियत्वं उत्तरत्र 'निचाय्य' 'मत्वा-इतिपदाभ्यामात्माकाराकारित्वं मनसः प्रतिपाद्यते तच्चानिन्द्रियस्य मनसः न संभवति इन्द्रियाणामात्माकाराकारित्वभवनसामर्थ्याभावात् भवति त्विन्द्रियाणां मनसि लयः तस्य चात्मनिलयः 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि'वाङ्मनसि संपद्यते। इत्यादिश्रुतिप्रामाण्यात्–सिद्धमेतावता मनन सामर्थ्यमनिंद्रिये मनसीति जिज्ञासाधिकरणोक्तः श्रवणमनननिदिध्यासनात्मको विचारः संस्कृतेननिर्मलेनेंद्रियाध्यक्षेण केवलेन मनसा मुमुक्षुभिः सर्वानर्थप्रहाणेहतवे ब्रह्मसाक्षात्कारायावश्यं कर्तव्य एवेति सिद्धांतः।

"शब्दशक्तिविषयं निरूपणं युक्तितः श्रवणमुच्यते बुधैः। वस्तुतत्त्वविषयं निरूपणं युक्तितो मननमित्युदीर्यते ॥"

वेदस्य पौरुषेयत्वं मनसीन्द्रियकल्पनाम्
निरस्यप्रथमे भागेमकरन्देपरात्परे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीआत्मानन्दसरस्वतीस्वामिभिर्विरचितः, वेदान्तशास्त्र मकरन्दे प्रथमःपरिच्छेदः।

# वेदान्तशास्त्रमकरन्दे द्वितीय-परिच्छेदः ।

वादे निरस्य निखिलप्रातिकूलपक्षं
वेदान्तसंततिलतेतरतारतम्यैः ॥
मोहान्धकारमलिनान्धिमलीकरोतु
वेदान्तशास्त्रमकरन्दमुपाकरिष्ये ॥ १ ॥

सरस्वतीं प्रणम्यादौ सर्व वाक्यार्थ सिद्धये ।
वेदान्तार्थमकरन्दंकुर्वे कालव्यतिक्रमे ॥ १ ॥
तत्रादौ परमाणुवादपटवो जल्पंति सर्वेश्वरे ।
साम्यं तस्य करोतिकश्चनजनो व्याप्यश्चसूक्ष्मश्चसः॥
आत्मत्वं किमिदं श्रुतेरधिगते तात्पर्यभानोदये ।
आत्मत्वं परमाणुता यदि भवेन्मोक्षस्यकावागतिः ॥

भवेदेवंयदिनिगमागमशब्दार्थप्रातिपादिकत्वेपरमाणूनां स्वरूपे प्रामाण्यं स्यात् नैवमस्ति परमाणुपरिभाषाया वेदप्रमाणागोचरत्वात् अथ चोपगम्यते "एषोऽणुरात्मा- "वालाग्रशतभागस्य शतधा कल्पितस्य च॥जीवो भागः

स विज्ञेयः" इत्यादिश्रुत्यर्थापातदृष्टिवलादात्मनोऽणुत्वं तदा रूपवत्तया चाक्षुषप्रत्यक्षविषयत्वमेकदेशित्वमल्पज्ञत्वमंशित्वमित्यनर्थपरंपरा स्यात् तथाच श्रुति शास्त्रविरोधेन परमाण्वात्मवादः कारणत्वधर्मेण साम्यतावादश्चाप्रामाणिकः कश्च स इति चेत् द्रव्यगुणकर्मसामान्यविशेषसमवायात्मषट्पदार्थवादो वैशेषिकः नैय्यायिकानामप्यविरुद्धो हेयत्वार्थः। तत्र गुणादयो द्रव्यपरतंत्राः भावकार्यं हि सर्वं समवाय्यसमवायिनिमित्ताख्यकारणत्रयजन्यं तत्र द्रव्यमेव समवायिकारणं द्रव्याणि तु पृथिव्यादिमनःपर्यंतानि नवैव तत्रापि पृथिव्यादिचतुष्टयानां परमाणव आकाशादि पंचकं च नित्यं परमाणुभ्यो द्व्यणुकादिकमुत्पद्यते इतश्च द्व्यणुकादिब्रह्माण्डान्तं सर्वं कार्यजातमनित्यम् अवयवसमवेतत्वात् अपकृष्टमहत्परिमाणतारतम्यस्य परमहतिगगनादौ विश्रांतत्ववदणुपरिमाणतारतम्यस्य क्वचिद्विश्रांतिर्वाच्या यत्र च विश्रामः स परमाणुरिति वादिमतसिद्धांतगर्भः नचाणुपरिमाणतारतम्यस्य जालसूर्यमरीचिस्थरजसि त्रसरेणौ विश्रांतिरस्त्विति वाच्यं तस्य चाक्षुषद्रव्यत्वेन सावयवत्वानुमानेन तदवयवद्व्यणुकासिद्धौ चाक्षुषद्रव्यारंभकत्वेन द्व्यणुक-

स्यापि सावयवत्वसिद्ध्यापरमाणुसिद्धिः तस्यापि सावयवत्वेऽनवस्थाप्रसङ्गः स च नेष्टः अनंतावयवारब्धत्वाविशेषेणमेरुसर्षपयोः साम्यत्वप्रसंगात् परमाणुर्निरवयवोऽभ्युपगन्तव्यः स च समवाय्यसमवायिकारणानिरूपणादनादिःविनाशकारणाभावान्नित्यः एवमाकाशादीनामपि सर्वत्र कार्योपलब्ध्या विभुत्वेन निरवयवद्रव्यतयोत्पत्तिविनाशकारणाभावादुत्पत्तिविनाशशून्यत्वं यतो ह्यवयवेष्वेवावयविन उत्पत्तिरवयवनाशादवयविध्वंसः निरवयवत्वान्नोत्पत्तिविनाशौ संभवत इति पृथिव्यादिचतुष्टयस्य परमाणूनामाकाशादिपंचकस्य च नित्यत्वमभ्युपेयते तार्किकैः नचोत्पत्तिश्रुतेराकाशादेः कथमनादित्वमित्याशंकनीयं "वायुश्चांतरिक्षं वै तदमृतम्" इत्यादिप्रमाणांतरविरोधेनोत्पत्तिश्रुतेर्गौणत्वाभ्युपगमात् तथाच पारमर्षं सूत्रं 'गौण्यसंभवात्' इति पुनरत्रेदं चिन्त्यते शक्तिसादृश्यादीनामतिरिक्तपदार्थानां विद्यमानत्वेन कथं षडेव पदार्था उच्यंते नच शक्तिसादृश्याद्यतिरिक्तपदार्थसत्त्वे मानाभाव इत्याशंकनीयं करतलानलसंयोगे सति मण्यादिसमवधाने दाहानुत्पत्त्या तदपनये च दाहोत्पत्त्या वह्नौ दाहानुकूलशक्तेरुत्पत्तिविनाशशालिन्या अवश्यमभ्युपगंतव्य

त्वात् नच प्रतिबंधकाभावाभावान्न तत्र दाहोत्पत्तिःमण्यादीनां हि दाहोत्पत्तिप्रतिबंधकत्वं सार्वजनीनं प्रतिबंधकत्वं हि कार्यानुत्पाद प्रयोजकत्वं तथाच प्रतिबंधकसंसर्गाभावस्य कार्यमात्रं प्रतिजनकत्वान्न शक्तिकल्पनावश्यकत्वमिति वाच्यं तदन्वयव्यतिरेकयोः कार्यानुत्पादस्य अग्रिमसमयसम्बन्धसंपादकत्वेनान्यथासिद्धत्वात् व्यापारेण व्यापारिणोऽन्यथासिद्धत्वनियमात् "कथमसतः सज्जायेतेति" श्रुत्या नासतोदृष्टत्वात्" इतिन्यायेन चाभावकारणत्वस्य निराकरणाच्च कारणे कार्यानुकूला शक्तिरवश्यमभ्युपेया एवं सादृश्यमप्यतिरिक्तः पदार्थः सामान्यवृत्तित्वे सति सामान्येतरवृत्तित्वात् अन्यच्च परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्नित्यमेव भावात् प्रलयाभावप्रसंगः। निवृत्तिस्वभावत्वे निवृत्तेर्नित्यमेव भावात्सृष्ट्यभावप्रसंगः अपिच चतुर्विधाः परमाणवो रूपस्पर्शादिमंतो नित्या अणवश्चेति वैशेषिकासिद्धांतः स नोपपद्यते। तथाहि परमाणवोऽनित्याः स्थूलाश्चभवितुमर्हंति रूपादिमत्त्वात् घटादिवत् जगत्कारणस्य रूपादिमत्त्वेनानित्यत्वप्रसक्तौ स्वकारणापेक्षया स्थूलत्वावश्यकत्वादपसिद्धांतापातःरूपादिमत्त्वाच्च "विपर्ययोऽदर्शनात्" इति पारमर्षेण

सूत्रेणाणुत्वानित्यत्वविपर्ययं स्थूलत्वानित्यत्वे प्रदर्श्य परमाणुकारणतावादखंडनमकारि एतेन प्रधानमल्लनिवर्हणेन पुराणमात्रोपजीविनो विशिष्टाद्वैतशुद्धाद्वैतद्वैतवादिनो वेदबहिर्भूता निराकृता वेदितव्याः "वाचारंभणं विकारो नामधेयं अतोन्यदार्तम्" इत्यादिश्रुत्या द्वैतस्य निरस्यमानत्वात् सर्वेपि द्वैतावलंबना वादा निरस्ता वेदितव्याः। ननु श्रुत्या निरासेपि द्वैतस्य स्वयमेव सर्वलोकप्रत्यक्षसिद्धत्वं अयमस्मात्पृथक् इति व्यवहारः भेदापरपर्यायं द्वैतं स्पष्टमावेदयति। तेन च ज्येष्ठेन प्रबलेन प्रत्यक्षप्रमाणेन दुर्बलानामद्वैतवेदांतानां बाध्यमानत्वात्प्रामाण्यमपि न स्यात् इति चेत् उच्यते, अपौरुषेयतया निर्दोषेण उपक्रमादिषड्विधलिंगावधृततात्पर्येण तत्त्वमस्यादिवाक्येन प्रबलेनाद्वैतबोधनात् नाद्वैतस्याप्रामाणिकत्वं नवाऽप्रामाण्यमद्वैतवेदांतानाम् प्रत्युत प्रबलेनाद्वैतवेदांतप्रमाणेन पौरुषेयतया भ्रमप्रमादादिदोषाकरस्य प्रत्यक्षप्रमाणस्यैव बाधितार्थविषयत्वादप्रामाण्यम् अद्वैतनिष्ठाशून्यानामधःपातमाह स्वयं श्रुतिः तां शृणु अवधारय च- "अन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा॥ देहात्मबुद्धिजं पापं न

तद्धोवधकोटिभिः" इत्यादिश्रुतिस्मृत्यादिषु अप्रत्याख्येयमहापापित्वश्रवणात् तेषां पुनर्महाघोरनरकवासश्च श्रूयते "ताँस्ते प्रेत्यापिगच्छन्ति ये केचात्महनो जनाः" इत्यादिश्रुतिषु आत्मा च कर्तृत्वभोक्तृत्वादिरहितः सच्चिदानंदस्वरूपः तद्विपरीतं कर्तारं भोक्तारमसज्जडदुःखात्मकमात्मानं देहतादात्म्याध्यासेन प्रतिपद्यमाना आत्महनो भवंतीति श्रुत्यर्थः रूपादिविहीनस्य ब्रह्मणः प्रमाणांतरावेद्यत्वेन तत्प्रतिपादकवेदांतानां प्रमाणांतरानपेक्षत्वात्। उपक्रमादिलिंगैर्वेदांता ब्रह्म प्रतिपादयंति तथाहि "सदेव सौम्येदमग्र आसीत्" एकमेवाद्वितीयं ब्रह्म "आत्मा वा इदमेक एवाग्र आसीत्" नान्यत्किंचनमिषत् इत्याद्युपक्रमादयः स्वयमवगंतव्याः तैर्लिंगैरद्वैतं ब्रह्म प्रतिपाद्यते तद्रूपश्चात्मा तं च कंठगतचामीकरन्यायेन विस्मृत्या ज्ञानविमोहितानां द्वैतवादप्रलापः स चोपक्रमादिलिंगावधृततात्पर्यैरद्वैतश्रुतिभिः प्रबलप्रमाणैः पुष्टैः परास्तो वेदितव्यः एतदेव सर्वं स्मृत्यनवकाशदोषप्रसंगादित्यस्य व्याख्यानावसरे स्पष्टीकृतं भाष्यकृता-अद्वैतसिद्धांतबोधरहितानां द्वैतवादप्रसक्तानामर्थवादविमोहितात्मनां भ्रांतानां द्वैतवादिनामविचार्य तन्मतमनुप्रपन्नानामंधानां च

'अंधेनैव नीयमाना यथांधा' इतिन्यायेनानंतोऽवारितश्च गर्तपातो भवतु। अर्थवादत्वं विध्यपेक्षितार्थबोधकत्वं प्रमाणांतरसिद्धार्थबोधकत्वं प्रमाणांतरसिद्धत्वं वा तच्च न वेदांतानां तत्प्रतिपादितप्रमेयानां वा संभवति। एवमर्धवैनाशिकानां वैशेषिकानां मते निरस्ते संपूर्णवैनाशिकानां सुक्तकच्छानां बौद्धानां विवसनानामार्हतानां च स्मृतत्वात् स्मृतत्वे सत्युपेक्षानर्हत्वरूपप्रसंगसंगत्या बुद्धिस्थं मतं निराक्रियते। 'बुद्धेरात्मा महान्परः' 'असंगो ह्ययं पुरुषः' इत्यादिश्रुतिषु बुद्धिसाक्षित्वप्रतिपादनादसंगस्य परिणामासंभवाच्च क्षणिकविज्ञानवाद आर्हतपरिणामानैकांतिकवादश्चाप्रामाणिको वेदितव्यः तेषां बुद्धिधर्मेणाज्ञानेनावृतज्ञानत्वादन्यथा प्रतिपत्तिर्मुमुक्षूणामनुपादेया। तथाचोक्तं भगवता' अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः 'अत्र भगवता मिथ्याज्ञानावरणकार्यमोहपिशाचिकयापहृताद्वैतात्मतत्त्वस्वयंप्रकाशस्फुरणाः प्रजल्पंत्युन्मत्तवत्सर्वेऽपि द्वैतवादिनः स्वपरविनाशकाः भविष्यन्तीत्युक्तम्। तत्र जडकारणतावादसाम्येन निरीश्वरवादिनो कापिलाः सांख्या अपि भ्रांता एव तेषां मतेऽचेतनस्यैव प्रधानस्य

स्वर्गापवर्गार्थं स्वतंत्राप्रवृत्तिरित्यंगीकारः सच सर्वथा लोकप्रसिद्धानुभवविरुद्धः तथाहि लोके रथादेरचेतनस्य चेतनाद्यधिष्ठितस्यैव प्रवृत्तिर्दृश्यते एवमचेतनस्यापि प्रधानस्याधिष्ठात्रा चेतनेनावश्यं भवितव्यमिति केवलप्रधानकारणतावादः पराकृतो वेदितव्यः । अस्तु तावत् अस्मदादीनां श्रुतवेदांतपरमोदारचित्तानाम-द्वैताचार्यकृपापात्रत्वादद्वैतब्रह्मनिष्ठापरत्वमिव सर्वेषां भारतीयानामद्वैतपरब्रह्मणिसमर्पितांतरत्वमित्यभ्यर्थयामो महेश्वरं सांजलिवंधमन्यथा 'यथा गुरुस्तथा शिष्य' इति न्यायेनाधःपातो दुष्परिहार एवावगंतव्यः तथात्र नैय्यायिकाभिमतसाधनसमानाधिकरणात्यंताभावप्रतियोगितानवच्छेदकं तदवच्छिन्नसामानाधिकरण्यमिति सिद्धांतव्याप्तिलक्षणे साध्यतावच्छेदकहेतुतावच्छेदकसम्बन्धप्रतियोगिवैय्यधिकरण्यादिप्रवेशवाग्जालजटिलाटवीप्रवेशनं ब्रह्मजिज्ञासूनां मोहायैव भवेदित्यनादरणीयमेवांतर्मुखैरात्मनिष्ठैः पुनरनुमानत्रैविध्यं कल्पयति तार्किकः तद्धि केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि च तन्न संगच्छते यतः वृत्तिमदत्यंताभावाप्रतियोगित्वं केवलान्वयित्वं तच्च सर्वथा श्रुतिविरोधाकुलं ब्रह्मभिन्नस्य

सर्वस्यैवानित्यत्वेन कल्पितत्वात् कल्पितस्य चाधिष्ठाननिष्ठात्यंताभावप्रतियोगित्वमेवेति केवलान्वयित्वमसिद्धम् । नच प्रमेयत्वादीनां तथात्वात्कथमसिद्धिरिति वाच्यं प्रमाविषयत्वं हि प्रमेयत्वं प्रमाया भिन्नभिन्नविषयत्वेन प्रमानिरूपितविषयताया अपि भिन्नत्वात् न कस्यापि केवलान्वयित्वं वक्तुं शक्यम् ईश्वरप्रमाया विषयत्वेऽपसिद्धांतः तस्या ईश्वराविषयत्वे कुतः केवलान्वयित्वं नचाकाशात्यंताभावस्य केवलान्वयित्वमिति वाच्यम् आकाशेऽसत्त्वेन केवलान्वयित्वव्याघातात् यथा प्रतियोगितदभावयोः सामानाधिकरण्यवत् प्रतियोग्यभावयोराधाराधेयभावस्याप्यनंगीकारात् अथ यथाकथंचिदंगीकारेपि श्रुतिसिद्धांते ब्रह्माभिन्नस्य सर्वस्य मिथ्यात्वादाकाशाभावस्याप्यभावसत्त्वेनात्यंताभावप्रतियोगित्वमेवेति कुतस्तस्य केवलान्वयित्वमिति निरूपितं केवलान्वयित्वम् अन्यच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानादनुमितिरितिनैय्यायिका मन्यंते तत्र साधनाभावनिरूपितायाःसाध्याभावनिष्ठाया व्याप्तेःसाधननिष्ठत्वाभावेन केवलव्यतिरेकस्थले व्याप्तिप्रकारकपक्षधर्मताज्ञानासंभवादनुमित्यनुपपत्तिः किंच साध्यप्रसिद्धेरनुमानांगत्वेन पृथिवीपक्षकेतरभेदसा-

ध्यकानुमानस्थले न कुत्रापि साध्यप्रसिद्धिरित्यतोनुपपत्तिः स्यादेव अप्रसिद्धशशशृंगसाध्यकानुमानेन शशविषाणानुमितिस्वीकारप्रसंग आपद्येत नैय्यायिकानाम् नच घटादावितरभेदः प्रत्यक्ष इति न साध्या प्रसिद्धिरिति वाच्यं प्रत्यक्षसिद्धेर्थेऽनुमानानवकाशः प्रसज्येत अनुमितिं प्रति साध्यसिद्धेः प्रतिबंधकत्वात् पक्षताव्याघातः तस्माद्व्यतिरेक्यनुमानकल्पनं सर्वथा उपपन्नमेवपुनरत्र तार्किकाणामसत्प्रलपनमुदाह्रियते तथाहि यथा पृथिव्यादयः षट् पदार्था इति षट्त्वसंख्याप्रतिज्ञानं शक्तिसादृश्याद्यतिरिक्तपदार्थसत्तयाऽसंगतं तथा नवैव द्रव्याणीति द्रव्याणां नवत्वसंख्याप्रतिज्ञानमप्यसंगतमेव प्रतीयमानस्य तमसो भावत्वेनाभावत्वकल्पनायां मानाभावात् नीलं तमश्चलतीत्यादि प्रत्यक्षप्रतीत्यातमसो नीलरूपादिमत्त्वेन चलनादिक्रियावत्त्वेन द्रव्यत्वसंभवात् गुणवतो क्रियावतश्च तार्किकैर्द्रव्यत्वस्वीकारस्यावश्यकत्वात् अथ च क्रियावत्त्वेन सावयवत्वादपि द्रव्यत्वं तमसः संभवतीति द्रव्याणां नवत्वप्रसंख्यानं सर्वथासंगतमेव तथैवात्मनो द्रव्यत्वं नैय्यायिकाभिमतमसंगतमेव तत्र प्रमाणाभावादयं तार्किकाणामात्मद्रव्यत्ववादः स्वकपोलकल्पितोऽपसिद्धांतः

नायमसत्तर्कः प्रामाण्यमश्नुवीत श्रुतिस्मृतिविद्वदनुभवव्याकोपेनात्मनो द्रव्यत्वकल्पनाया अप्रामाणिकत्वात् मताभिनिवेशेन बलात्तदभ्युपगमे गुणवत्त्वाद्यभ्युपगमोपि आवश्यकः द्रव्यस्य गुणक्रियाश्रयत्वानियमात् "निर्गुणंनिष्क्रियम्"इत्यादिश्रुतिविरोधप्रसंगः। अथ चात्मनो द्रव्यत्वे गुणक्रियादिपारतंत्र्येणात्मनो स्वातंत्र्यव्याघातः स च नेष्टः यतो ह्यात्मनः सर्वकल्पनाधिष्ठानत्वे सर्वप्रेरकतया श्रुतिभिः सिद्धांतितत्वान्न पारतंत्र्यकवलितं द्रव्यत्वमात्मनःकदापि मंतुं शक्यं तथाच नैय्यायिकानां नवद्रव्यकल्पना आत्मनश्च द्रव्यत्वकल्पना सर्वथैवासंगता प्रमाणविरुद्धाच। पुनरयं दोषस्तार्किकाणां मतं खंडयति तथाहि'अतोन्यदार्त'मित्यादिश्रुतिभिर्ब्रह्मभिन्नस्य निखिलप्रपंचस्यानित्यत्वप्रतिपादनात् कथमाकाशादीनां परमाणूनां च नित्यत्वं तेषामपि प्रपंचांतर्गतत्वादनित्यत्वमेव एवं पृथिव्यादिचतुष्टयपरमाणूनामल्पत्वात्परिच्छिन्नत्वादनित्यत्वं नच तस्या उपचरितार्थत्वं प्रमाणांतरैर्विरोधापातादिति परमाण्वाकाशादीनां कारणत्वनित्यत्वाद्यभिमानः शतशः खंडयितुं शक्य इति किमु वक्तव्यं तस्य सकलवेदप्रमाणबहिर्भूतत्वात् नच विभुत्वेन निरवयवत्वान्नित्य-

त्वमिति शंक्यम् । उत्पत्तिश्रुत्या नित्यत्वबाधनिश्चयात् विभुत्वस्यापि कार्यापेक्षितत्वात् परमाणूनामल्पानाम-नित्यत्वस्य ब्रह्मणोपि दुरुद्धरत्वात् परमाणूनां जन्यतया यज्जन्यं तदनित्यमिति न्यायेनानित्यत्वम् अव्याप्यत्वा-त्परमाणूनां कुतो विभुत्वम् आकाशादीनां विभुत्वेनाभि-मतानामुत्पत्तिं श्रुतिराह "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिउदाहृतशास्त्रविरोधात् न पर-माणूनां नित्यत्वमिति आत्मसाम्यानवकाशः तार्किका-भिमतम् आत्मनो द्रव्यत्वं सर्वथा श्रुत्यनुभवविरोधाद-संगतमेव नायमात्मा द्रव्य इति सिद्धं नैय्यायिकानां मते अनित्या कार्यरूपा नित्या परमाणुरूपा तत्र पर-माणूनां नित्यत्वं खंडितमेव यच्च कार्यं तत्समवाय्य-समवायिनिमित्तेतिकारणत्रितयजन्यं तादृशकारणत्रि-तयजन्यत्वं नात्मनः अनादित्वात् तस्मादात्मा न कार्यमिति नित्य एवात्मेति सिद्धम् । नैय्यायिकानां समवाय्यसमवायिकारणपरिभाषापि वेदबहिर्भूतत्वा-दप्रामाणिकी । कुतस्तर्हि कार्योत्पत्तिरिति चेत् उपा-दाननिमित्तकारणाभ्यामिति निरूपयिष्यामः ॥ सम-वायस्याप्यसंभवो वक्ष्यते । परमाणूनाम् उत्पत्तिवि-नाशशालित्वे कुतः ब्रह्मणोपि तन्न स्यात् । तस्यापि

कारणमित्यनवस्था स्यादिति ब्रह्मणो नोत्पादविनाशशालित्वमिति ब्रह्मणो नित्यत्वं शतशः श्रुतयः प्रब्रुवन्ति वेदांतसिद्धांते ब्रह्मभिन्नस्य प्रपंचस्यात्यंताभावप्रतियोगित्वेनानित्यत्वं "योवै भमा तदमृतम् अतोन्यदार्त" इत्यादिश्रुतयोनुसन्धेयाः वैशेपिकमते परमाणुकारणतावादो अज्ञानकारणतावादप्रतिपक्षित्वेनोपन्यस्यते स किं मानमूलो वा भ्रान्तिमूलो वेति सन्देहे मानमूल इति पूर्वपक्षे भ्रांतिमूल एवेति सिद्धांतः परमाणुकारणतायाः सर्वप्रमाणबहिर्भूतत्वात् किंच वैशेपिकाः खलु सृष्टेः पूर्वं निश्चलयोः परमाण्वोः क्रियया संयोगे द्व्यणुकाद्युत्पत्तिं वदन्ति तत्र ते प्रष्टव्या भवंति कर्मणः किञ्चिन्निमित्तमभ्युपगम्यते न वा आद्ये कर्मनिमित्तत्वेन प्रसिद्धजीवप्रयत्नव्याघातादिकमंगीकर्तव्यं तन्न संभवति सृष्ट्युत्तरकालीनत्वात्तस्य द्वितीये कर्मानुत्पत्तिः 'अत उभयथापि न कर्म' अतः कर्माभावात्तदभावः द्व्यणुकादिक्रमेण सृष्ट्युत्पादाभाव इत्यर्थः । पुनरन्यदत्र विचार्यते किं संयोगश्चाणोरण्वंतरेण सर्वात्मना वा स्यादेकदेशेन वा स्यात् सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसंगो दृष्टविपर्ययश्च प्रदेशवतो द्रव्यस्य

प्रदेशवता द्रव्यांतरेण संयोगस्य दृष्टत्वात् एकदेशेन चेत् सावयवत्वप्रसंगादनित्यत्वमापद्येत यदि चोच्येत कल्पिताः परमाणूनां प्रदेशास्तर्हि कल्पितानामवस्तुत्वादवस्त्वेव संयोग इति न तस्यासमवायिकारणत्वं स्यात् तथा च द्व्यणुकादिकार्योत्पत्तिस्तस्मादनुपपन्नो-परमाणुकारणतावादः पुनश्चायमत्र दोषः तथाहि पुराणे स्मर्यते "आकाशः शब्दमात्रं हि स्पर्शमात्रं समाविशत्॥द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मको भवेत्॥१॥ रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ॥त्रिगुणस्तु ततो वह्निः सशब्दस्पर्शवान्भवेत् ॥ २ ॥ शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् ॥ तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥ ३ ॥ शब्दः स्पर्शश्च रूपं च रसश्चेद्गंधमाविशत्। संहतान्गंधमात्रेण तानाचष्टे महीमिमाम्॥४॥तस्मात्पंचगुणा भूमिः स्थूला भूतेषु दृश्यते। परस्परानुप्रवेशाद्धारयंति परस्परम्।"इत्यागमबलात्परस्परं संहन्यमाना गंधादयः पृथिव्यादयः यथायथा संहन्यमानानामुपचयस्तथातथा संहतस्य स्थौल्यं यथायथापचयस्तथातथा सौक्ष्म्यमित्यनुभवागमाभ्यामवस्थितोर्थोऽनिच्छद्भिरपि वैशेषिकैरभ्युपगंतव्यः तथा

च वैशेषिकैः शब्दस्य पृथिवीगुणत्वानंगीकारात् गंधरसरूपस्पर्शगुणा पृथिवी स्थूला रूपस्पर्शरसगुणाः सूक्ष्मा आपः रूपस्पर्शगुणं सूक्ष्मतरं तेजः स्पर्शगुणो वायुः सूक्ष्मतमः तद्वत्परमाणवो व्युपचितापचितगुणाः कल्प्येरन्न वा उभयथा च दोषानुषंगः तथा च पारमर्षं सूत्रं'उभयथा च दोषात्' इति अत्र पार्थिवपरमाणुराधिकगुणः तत एकैकन्यूनगुणा जलादिपरमाणव इति कल्पनमाद्यपक्षः तदंगीकारे उपचितगुणानां स्थौल्यादपरमाणुत्वप्रसंगः मूर्त्युपचयमंतरेण गुणापचयो भवतीति वक्तुं न शक्यं कार्यभूतेषु गुणोपचय एव मूर्त्युपचयो दृश्यते। उपचितापचितगुणत्वं न कल्प्यते इति द्वितीयपक्षे परमाणुत्वसाम्यप्रसिद्धये यदि तावत्सर्वे एकैकगुणाः कल्प्यंते तदा तेजसि स्पर्शोपलब्धिर्न स्यात् अप्सु च रूपस्पर्शयोः पृथिव्यां च रूपस्पर्शरसानां कारणगुणपूर्वकत्वं हि कार्यगुणानां अथ सर्वेपि चतुर्गुणाः कल्प्यंते तदा अप्स्वपि गंधोपलब्धिः स्यात् तेजसि गंधरसयोः वायौ गंधरूपरसानां न चैतादृशो लोकानुभव इत्युभयथापि दोषात् परमाणुकारणतावाद अनुपपन्नः । अयमश्रौतः पर-

माणुकारणतावादो न कैश्चिदपि शिष्टैः केनचिदंशेनापि परिगृहीत इत्यत्यंतमनादरणीय एव वेदनिष्ठावद्भिर्मुमुक्षुभिरित्यलं पल्लवितेनेति शिवम् ॥

परमाणुकारणविवादमतं परास्तम् ।
वेदान्तशास्त्रमकरन्दगतद्वितीये ॥
वादप्रसङ्गदुरतिक्रमविक्रमाद्याः ।
नैय्यायिकादिजटिलाः कुटिलाश्च तेषाम् १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्यआत्मानन्दसरस्वतीस्वामिभिर्विरचितो "वेदान्तशास्त्रमकरन्दे" परमाणुकारणतावादनिरासपरो द्वितीयपरिच्छेदः ॥

---

श्रीविघ्नेशानाय नमः ।

# अथ वेदान्तशास्त्रमकरन्दे तृतीयपरिच्छेदः ।

नमस्कृत्य गुरुं देवं शर्वं सर्वेश्वरं हरम् । अम्बां तां शारदां नत्वा चक्रुः सांख्यविचारणाम् ॥ १ ॥ येषां गिरोऽज्ञानतमोहराश्च श्रुतौ गताःपुण्यवशेन लभ्याः ॥ गुरूंश्च तानात्मविदां वरिष्ठान्नमामि नित्यं प्रतिवोधरूपान् ॥२॥ प्रचंडपाखंडविखण्डनोद्यतं त्रयीशिरोर्थप्रतिपादने रतम्॥ बुधैर्नुतं योगकलाभिरावृतं नमामि नित्यं गुरुशंकरार्यम् ॥ ३ ॥

पूर्वपरिच्छेदे परमाणूनां प्रवृत्तिस्वभावत्वे प्रलयाभावप्रसंगः । निवृत्तिस्वभावत्वे सृष्ट्यनुत्पादप्रसंग इत्यादिदोषैः परमाणुकारणतावादस्य भ्रांतिमूलत्वं समर्थितं पुनश्च रूपादिमत्त्वात्परमाणवो न नित्या नाप्यणवः किंतु स्थूला अनित्याः घटपटादिवत् इत्याद्यनुमानैः परमाणुकारणतावादस्य भ्रांतिमूलत्वं

सम्यक् प्रदर्शितम् इदानीं जडकारणतावादसाम्येन स्मृतत्वात्प्रधानमल्लत्वेन उपेक्षानर्हत्वात् तत्त्वप्रसंख्यानार्थं प्रवृत्तस्य सांख्यस्य जगत्कारणत्वांशेपि श्रुतिसंमतत्वभ्रमो माभूदित्येतदर्थं प्राधान्ये सांख्यानां तदितराणामश्रौतानां पुराणमात्रोपजीविनां च निरासोऽस्मिन् तृतीयपरिच्छेदे क्रियते ॥

केचित् कापिलनास्तिका इह जिना बौद्धेन्धनो माधवो चार्वाको कपटप्रबंधरचनावाग्वैखरीशालिनः ॥ सर्वेषां हितकाम्यया श्रुतिसुखेनाद्वैतविद्वेषिणां तत्त्वज्ञानसुखोपदेशमधुना कर्तुं प्रवृत्ता वयम् ॥ १ ॥

तत्रतावदर्धवैनाशिकखंडनेनोपस्थिताः पूर्णवैनाशिका बौद्धादयः कंटका इव प्रथममुद्ध्रियंते तत्र माधवावतारेण बुद्धमुनिना बौद्धागम उपदिष्टः ते चतुर्विधाः सौत्रांतिकवैभाषिकयोगाचारमाध्यमिकाभिधानाः सर्वास्तित्वविज्ञानमात्रास्तित्वसर्वशून्यत्ववादिनो प्रतिपत्तिभेदादभवन् तदुक्तं बोधिचित्तविवरणे

"बोधना लोकनाथानां सत्त्वाशयवशानुगाः। भिद्यंते बहुधा लोक उपायैर्बहुभिः पुनः ॥ गंभीरोत्तानभेदेन क्वचिच्चोभयलक्षणा। भिन्नापि देशनाऽभिन्ना शून्यताद्वयलक्षणा" इति ये च सर्वास्तित्ववादिनो बाह्यमांतरं च वस्त्वभ्युपगच्छंति सौत्रांतिकवैभाषिकयोरियानेव भेदः ते च भूतभौतिकचित्तचैत्ताख्यं पदार्थचतुष्टयं मन्यंते तत्र भूतं पृथिव्यादयः भौतिकं रूपादयः चित्तचैत्ताश्च रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पंच स्कंधाः तत्र विज्ञानस्कंधश्चित्तरूप आत्मेति मन्यंते, सविषयेंद्रियाणि रूपस्कंधः सुखाद्यनुभवो वेदनास्कंधः गौरश्व इत्येवंनामविशिष्टसविकल्पप्रत्ययः संज्ञास्कन्धः रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः यत्सत्तत्क्षणिकं यथाविद्युदादीत्येवंरूपां व्याप्तिमवष्टभ्य तेषां क्षणिकत्वमामनंति नायं सिद्धान्तो मानमूलो भवितुमर्हतीत्यभिधीयते "समुदाय उभयहेतुकेऽपि तदप्राप्तिः" अत्रायमभिसंधिः योयमुभयहेतुक उभयप्रकारको भूतभौतिकसंहतिरूपः पंचस्कन्धीरूपसमुदायः परेषामभिप्रेतः स न संभवति समुदायिनामचेतनत्वात् अन्यस्य कस्यचिदपि चेतनस्य भोक्तुः प्रशासितुः स्थिरस्य संहतेरनभ्युपगमात् निरपेक्ष-

प्रवृत्त्यभ्युपगमे प्रवृत्तेरनुपरमादनिर्मोक्षप्रसंगः । अथ मन्यसे संघाताः संसारेऽनादिसंतत्याऽनुवर्तंते तदापि संघातात्संघातमुत्पद्यमानं नियमेन सदृशमेवोत्पद्यते विसदृशं वा सादृश्यानियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात् अनियमे मनुष्यपुद्गलः कदाचित्क्षणेन हस्ती भूत्वा देवो वा मनुष्यो वा भवेदिति प्राप्नुयात् अपि च यद्भोगार्थं संघातः अभ्युपेयते स च भोक्ता क्षणिक इति तवाभ्युपगमः तथाच भोगापवर्गप्रवृत्तिः कस्य कस्य वा भोगापवर्गौ स्यातां अन्यद्भुक्तमन्यद्वांतामित्यनियमः प्रसज्येत । प्रत्यभिज्ञानानुपपत्तिरित्यतः सर्वथाऽनुपपन्नःस्वकपोलकल्पनाकल्पितो बौद्धानां समयःवलिवर्दाः शून्यवादिनस्तावदभावाद्भावोत्पत्तिं मन्यंते तेषां मते सर्वत्राभावत्वाविशेषात् नियतकारणात्कार्योत्पादप्रयासो व्यर्थःस्यात् अतिप्रसंग आपद्येत कारणीभूताभावान्वयित्वेन सर्वं नास्तीति प्रतीयात् सर्वथाऽनुपपन्नः शून्यकारणतावादः । तथैव स्वभावादुत्पद्यते अकस्मादेवोत्पद्यते इत्यभ्युपगमोपि स्वातिरिक्तकारणशून्यत्वं वा कारणसामान्यशून्यत्वं वेत्यादिविकल्पाकुलत्वादनुपादेय एवेति निरस्तो ब्रह्मकारणत्वसिद्धांतः

श्रौतः इदानीं श्रुतिसंमतत्वाभिमाननिरासायेश्वराव-मानिनो प्रधानकारणतावादिनः कापिलस्य तन्मतो-पन्यासपूर्वकं खंडनमुपक्रम्यते तत्र सांख्याः कूटस्थ-ब्रह्मणो ज्ञानक्रियाशक्त्यभावान्न जगत्कारणत्वमिति वदन्ति । प्रधानस्य तु तत्सत्त्वाज्जगत्कारणत्वमुपपद्यते वेदांतसिद्धांतेपीश्वरस्य साहाय्यभूतमवश्यमव्यक्तश-ब्दोदितं श्रौतं शक्त्यपरपर्यायमभ्युपगंतव्यमेव केवल-स्याकारणत्वसिद्धांतात् तथाच श्रुतिः 'देवात्मशक्तिं स्वगुणैर्निरूढां' 'मायां तु प्रकृतिं विद्यात्' इति श्रुति-सिद्धमीश्वरसहकारिभूतमव्यक्तमवश्यमंगीकर्तव्यं न-हि शक्तिरहित ईश्वरः कार्यलेशं वा कर्तुं योग्यः असंगत्वादविकारित्वाच्चेति तात्पर्यम् । अथैवमुच्यते कापिलैः 'सदेव सौम्येदमग्र आसीत्' इत्यत्र सच्छ-ब्दवाच्यं प्रधानमेव जगत्कारणत्वेनोपादिश्यते कुतो यानि वेदांतवाक्यानि सर्वज्ञस्य सर्वशक्तेर्जगत्कारण-त्वप्रतिपादकानि सर्वाणि तानि प्रधान एव संभवद-र्थानि भवन्ति प्रधानादेव त्रिगुणात्मिकां जगदुत्पत्ति-माह श्रुतिः 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः' इत्यत्राजायास्त्रिगुणात्मि-कायाः सकाशाज्जगत्सर्जनाभिधानात् एतदेवोपपद्यते

कार्यस्य जगतः सुखदुःखमोहान्वितस्य त्रिगुणात्म-प्रधानकार्यत्वौचित्यात् तथाच प्रधानस्यैव स्वकार्यविषयं सर्वशक्तिमत्त्वं सर्वथोपपद्यते यतः कारणमेव कार्ये शक्तं नाकारणं ब्रह्म क्रियाशक्तिमत्त्वाभावादपरिणामित्वाच्च तथा सर्वज्ञमपि प्रधानमेव न ब्रह्म यतः ज्ञानं हि सत्त्वधर्मः 'सत्त्वात्संजायते ज्ञानम्' इति स्मृतेः तच्च ज्ञानजनकसत्त्वं प्रधानस्य गुण इति प्रधानस्यैव सर्वज्ञत्वं न ब्रह्मणो निर्गुणत्वात् अपिच प्रधानस्यैवाने-कात्मकस्य परिणामसंभवाज्जगत्कारणत्वमुपपद्यते नैकात्मकस्य ब्रह्मणः इति तत्सर्वथानुपपन्नं यतः सांख्यमते त्रिगुणसाम्यावस्था हि प्रधानमिति तेषा-मंगीकारः । यदि च गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञत्वमभिधीयते तदा कामं रज-स्तमोव्यपाश्रयां ज्ञानप्रतिबंधशक्तिमाश्रित्य किंचि-ज्ज्ञत्वमपि वक्तव्यं स्यात् तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम् इतोपि न प्रधानमचेतनं जगत्कारणं भवितुमर्हति ईक्षणपूर्वकसृष्ट्यभिधानात् "स ईक्षत लोकान्नु सृजा" इति "स ईक्षांचक्रे" "स प्राणमसृजत" "यः सर्वज्ञः स सर्ववित्" इत्याद्यागमाः 'ईक्षतेर्नाशब्दं' इति पारमर्षं सूत्रं तच्चेक्षणपूर्वकं स्रष्टृत्वं नाचेतनस्य

प्रधानस्य भवाति. 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते' "अपाणिपादो जवनो ग्रहीता" "पश्यत्यचक्षुः स शृणोत्यकर्णः" "स वेत्ति वेद्यं नच तस्यास्ति वेत्ता" "तमाहुरग्र्यं पुरुषं महांत" मित्यादिश्रुतय ईश्वरस्यैव शरीराद्यनपेक्षतामनावरणज्ञानवत्त्वं च दर्शयंति तस्माद्ब्रह्मैव जगत्कारणं न प्रधानं अथैवमुच्यते अचेतनेपि प्रधाने औपचारिकमीक्षितृत्वमुपपद्यते कूलं पिपतिषतीत्यादिवत्. श्रुत्या चेदमौपचारिकमेवेक्षितृत्वमभीप्सितं 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यादावौपचारिकेक्षणाभिधानात्तदपि न संभवतीत्येतत् शंकानुवादपूर्वकं खंडयाति सूत्रकारः 'गौणश्चेन्नात्मशब्दात्' इति अस्मिन्सूत्रे आत्मशब्दो चेतनस्वरूपवचनोऽचेतनं प्रधानं निराकुर्वन् चेतनमेव जगत्कारणं प्रगृह्णाति तथैव श्रुतावुपक्रमः "आत्मा वा इदमेक एवाग्र आसीत्" "सदेव सौम्येदमग्र आसीदित्यादि" तस्मादनात्मा प्रधानं न जगत्कारणं अथ चोच्यते अचेतनेप्यात्मशब्दः प्रधाने संभवति कुतः प्रधानस्य सर्वात्मकार्यकारित्वात् यथा राज्ञः सर्वार्थकारिणि भृत्ये ममायमात्मेति यथा हि राज्ञः संधिविग्रहादिषूपकुर्वाणो भृत्यस्तथा प्रधानमात्मनो भोगापवर्गौ कुर्वदपका-

रकं अथैक एवात्मशब्दश्चेतनाचेतनविषयो भवति, भूतात्मा इंद्रियात्मेति बहुशः प्रयोगदर्शनात् यथैक एव ज्योतिःशब्दः क्रतुज्वलनविषयः तस्मात् प्रधानमेव श्रौतं जगत्कारणमिति अत्रोत्तरभूतं 'तन्निष्ठस्य मोक्षोपदेशात्' इति पारमर्षं सूत्रम् अस्यायमभिप्रायः नह्यचेतनं प्रधानमात्मशब्दालंबनं भवितुमर्हति कुतः 'स आत्मा' इति सद्रूपामात्मानमुपक्रम्य 'तत्त्वमसि श्वेतकेतो" इति सद्ब्रह्मात्मनिष्ठामुपदिश्य 'आचार्यवान्पुरुषो वेदतस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति मोक्ष उपदिश्यते अत्र पूर्ववादिमतानुसारेण पूर्वमेव चेतनं संतं मुमुक्षुं त्वं तदसीत्यचेतनप्रधानात्मत्वं ग्राहयत्शास्त्रमनर्थाय कल्पेत अथ च प्रमाणभूतं शास्त्रं श्रद्दधन् जडात्मबुद्धिं न परित्यजेत् तथा चान्धगोलांगूलन्याय आपतेत् तथाहि कश्चन दुष्टात्मा महारण्ये भ्रमंतं नगरं जिगमिषुमंधं मदोन्मत्तवृषभलांगूलं ग्राहयन्नवादीत् अयं त्वां नगरं नेष्यतीति स च श्रदधानस्तदत्यजन्महतीमनर्थपरंपरां प्राप्तः तद्वदेव मुमुक्षुर्जडमात्मतया गृह्णन् संसारानर्थपातमवारितमियात् तस्मात्सांख्यकल्पनं प्रतारणामात्रमवगंतव्यम् यथा वा घटशरावादि-

कं कार्यं मृदाद्यन्वीयमानं मृत्कारणकं तथा प्रपंचोपि सुखदुःखमोहान्वयितया त्रिगुणप्रधानकारणकः इत्य-वोचत्तर्कबलापूर्ववादी कापिलः किं तेन नेदमवलोक्यते तत्किमिति चेत्पश्य लोके हि नाचेतनं चेतनानाधि-ष्ठितं किमपि कार्यं कर्तुं प्रभवति यतः गेहप्रासादश-यनासनविहारभूम्यादयो हि चेतनेनैवाधिष्ठात्रा रचिता दृश्यंते तथेदं विचित्ररचनारूपमनेककर्तृभोक्तृसंयुक्तं लौकिकेन केनापि मनसाप्याकलयितुमशक्यं कथं काष्ठलोष्टकल्पेनाचेतनेन चेतनानधिष्ठितेन कर्तुं शक्यमित्यनीश्वरवादिना सांख्येन किमिति न विचार्यते किं तर्हि प्रधानकारणवादिनो सांख्याचार्या भ्रांता भविष्यंति श्रुतिस्तावत्कपिलाचार्यस्य ज्ञानातिशयं दर्शयति । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इति श्रुतिगीतमाहात्म्यसां-ख्याचार्यकपिलमहर्षिमतं तर्कावष्टब्धं कथमप्रमाणमि-त्यवगंतव्यं भवेत् तथाच परमप्रमाणसांख्यस्मृति बलात्प्रधानमेव जगत्कारणं न परमेश्वरः तत्रेयं कारिकानुसंधेया । "सांख्यस्मृत्यास्ति संकोचो न वा वेदसमन्वये॥धर्मे वेदः सावकाशः संकोचोनवकाशया॥" तथाच सांख्यानां पूर्वपक्षः संपन्नः कपिलमहर्षिप्रणी-

तशिष्टपरिगृहीतस्मृतीनामनवकाशदोषप्रसंगात् वेदांतानां प्रधाने समन्वयःइति एनं पूर्वपक्षमनुवदन्खंडयति भगवान् सूत्रकारः। "स्मृत्यनवकाश दोष प्रसंग इतिचेन्नान्य स्मृत्यनवकाशदोषप्रसंगात्" अथात्र सिद्धांतः प्रतिपाद्यते यदि च सांख्यवादिना कापिलस्मृत्यनवकाशबलेन ईश्वरकारणतावाद आक्षिप्यते तदा परमप्रमाणभूता ईश्वरकारणतावादिन्यो मन्वादिस्मृतयः अनवकाशाः प्रसज्ज्येरन् ताश्च स्मृतयः"अहं कृत्स्नस्य जगतःप्रभवः प्रलयस्तथा"इति भगवद्गीतासु भगवान् वासुदेवः तथा भगवानापस्तंबोपि "तस्मात् कायाः प्रभवंति सर्वे समूलं शाश्वतिकः सनित्यः" इति एवं पुराणेपि "अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः ससर्गकाले च करोति सर्वं संहारकाले च तदस्ति भूयः" इत्यादिस्मृतय ईश्वरकारणतावादिन्यो विरुध्येरन् दर्शितं च पुरस्तादेव श्रुतीनां ईश्वरकारणतायां तात्पर्यं तस्मात् श्रुतिप्रामाण्यावष्टंभात् मन्वादिस्मृतय एव प्रबलाः "यद्वै किंचन मनुरवदत्तद्भेषज" मित्यादिश्रुतिः स्वातंत्र्येण मन्वादिप्रामाण्यं ब्रवीति। इदं तु कंटकेनैव कंटकमिति न्यायमाश्रित्योक्तं अन्यथा ईश्वरकारणतावादिनीनां श्रुतीनां

विरोधेन कापिलस्मृतीनां प्रामाण्यं दूरतोपास्तं तथाच महर्षिजैमिनीयं सूत्रम् "विरोधे त्वनपेक्ष्यं स्यादसतिह्यनुमानम्" अस्यायमर्थः यदि स्मृतीनां श्रुतिभिः साकं विरोधे सर्वथाऽप्रामाण्य मविरोधे हि तासां प्रामाण्यं नचातींद्रियाणामर्थानां श्रुतिशरण्यमंतरा न किंचिदभ्रांतोपलब्धिसाधनमस्ति कपिलादिसिद्धानामपि धर्मानुष्ठानसापेक्षैवह्यप्रतिहतज्ञानासिद्धिः धर्मो हि चोदनालक्षणः श्रुत्यधीन इति न श्रौतसिद्धांतं बाधितुं क्षमंते अर्वाचीनस्मृतयः तत्रेयं सिद्धांतप्रतिपादिका कारिका "प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः ॥ अमूला कापिली बाध्या न संकोचो नयायतः। नचैवं कपिलस्य ज्ञानातिशयं प्रदर्शयंती श्रुतिरप्रमाणं स्यादिति शंकनीयं श्रुतिवाक्ये हि वैदिकः कपिलो वासुदेवनामा षष्ठिसहस्रसंख्यानां सगरपुत्राणां भस्मीभावहेतुः। सांख्यप्रणेतुरवैदिकात्कपिलादन्य एव स एव'सिद्धानां कपिलो मुनिः' इत्यत्रभगवद्गीतायामुक्तः अयंच सांख्यदर्शनकर्ताअवैदिककपिलः सर्वश्रुतिस्मृतिसंमतं सर्वात्मत्वदर्शनं नानुमन्यते आत्मभेदाभ्युपगमो हि सांख्यानामिष्टस्ततोपि वेदविरुद्धं कापिलं सांख्यदर्शनं "एक एव हि भूतात्मा भूतेभूते व्यव-

स्थितः । एकं संतं वहुधा कल्पयंति ॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतांतरात्मा'' इत्यादिश्रुतयः, 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति' इत्यादि मन्वादिस्मृतयश्च सर्वत्रैकात्मतां दर्शयंति । तस्माद्वेदस्मृतिविरोधात्सांख्यदर्शनं कैवल्येप्सुभिर्हेयमेव–तथैव प्रधानं तत्परिणामित्वेन महदादीन्यपि सर्वाण्यवैदिककल्पनादूषितानीति परिहर्तव्यान्येव ''इतरेषां चानुपलब्धेः'' इत्यनेन सूत्रेण प्रधानपरिणामित्वेन सांख्याभिमतानि महदादितत्त्वान्यपि खण्डितवान्सूत्रकारः अस्मन्मते ब्रह्मव्यतिरिक्तस्य सर्वस्याधिष्ठाननिष्ठात्यंताभावप्रतियोगित्वेन मिथ्यात्वेन सिद्धांतितत्वात् प्रधानस्यापि तथात्वेन तस्य स्वीकारे ब्रह्मणि परतंत्रता स्यात् तथा च श्रुतिविरोधः । तस्मात्स्वतंत्रप्रधानवादपरिग्रहो सांख्यानां दूषितःसमन्वयाधिकरणे भाष्यकृच्छंकरभगवत्पूज्यपादैः स्वतंत्रस्य ब्रह्मणो जगत्कारणत्वं सर्वश्रुतीनां समन्वयेन दर्शितं ब्रह्मैव स्वशक्त्यभिधेयप्रकृतिमाश्रित्य लोकान् सृष्ट्वान्तर्यामितया ईश्वरत्वेनाभिधीयते तथाच ''तत्सृष्ट्वा तदेवानुप्राविशत्॥'' इति तदनुप्रविश्य ''निरुक्तंचानिरुक्तं च। निलयनंचा-

निलयनं च विज्ञानंचाविज्ञानं च। सत्यंचानृतं च सत्य मभवत्॥''तथा ऐतरेऽपि ॥ ' स ईक्षत इमाँल्लोकान्नसृजत' इति ॥ आसु प्रकृतेर्भिन्नाया अप्रतिपादनात् प्रधानकारणतावादो भ्रांतप्रलपनमात्रं नचात्र शंक्यमीक्षणादिश्रुतेः चक्षुःसंयोगं विना ईक्षणकर्तृत्वायोगात् ब्रह्मणोपि चक्षुरादिइंद्रियस्वीकारप्रसंगः इति " पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादि श्रुतिवलान्मायावृत्यात्मकेशसंकल्पस्यैवेक्षणपदार्थत्वस्वीकारात् नहि स्वतंत्रस्य सर्वशक्तिमतो कुलालवत् दंडचक्रादिसाधनपारतंत्र्यमस्ति अमुमेवार्थं मनसि कृत्वाभिन्ननिमित्तोपादानत्वं श्रुतिर्ब्रूते न चैतददृष्टचरं ऊर्णनाभ्यादेरभिन्ननिमित्तोपादानस्य दृष्टत्वात् तथाच श्रुतिः ' यथोर्णनाभिः सृजते गृह्यते च यथा पृथिव्या ओषधयः संभवंति । यथासतः पुरुषात् केशलोमानि भवंति तथा क्षरात्सम्भवतीह विश्वम्'इत्यादिश्रुत्या ब्रह्मण एवाभिन्ननिमित्तोपादानत्वं निर्धारितमित्यलंसांख्यखंडनविस्तरेण ।

अत्रानर्थनिवारणमद्वैतबोधमेव प्रतिपादयंति भगवंतो गौडपूज्यपादाचार्याः तत्रेयं मांडूक्योपनिषद्व्याख्यानकारिका"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा "

तस्मान्मोक्षकामैः पुरुषैरद्वैतात्मबोध एवोपनिषदर्थविचारेण संपादनीयः न द्वैतदुर्गन्धकश्चरंभेदशास्त्रं स्वप्नेप्याघ्रातव्यं धर्मार्थकाममोक्षेषु पुरुषार्थेषु चरम एव ज्यायान् तस्यैव "न स पुनरावर्तते"॥ इतिश्रुत्या नित्यत्वावगमात् स एव मुमुक्षूणां साध्यः तत्साधनं प्रत्यग्ब्रह्मात्मैकत्वविज्ञानं तच्च उपनिषद्भ्य एव पूर्वोक्तविवेकादिविशेषणविशिष्टानामधिकारिणां जायते सैव पराविद्येत्याभिधीयते 'अथ परायया तदक्षरमधिगम्यते' साच विवेकादिसाधनसंपत्तिः शुद्धान्तः करणानां संभवति अंतःकरणशुद्धिर्निष्कामकर्मानुष्ठानसाध्या तच्च कर्मानुष्ठानं धर्मज्ञानेन सम्यक् भवति तादृशधर्मज्ञानहेतुभूतानां षडंगसहितानां कर्मकांडानामपरविद्यात्वं तत्र द्वैतविशिष्टाद्वैतजैनचार्वाकनिंबार्करामानुजमाध्ववल्लभकुलादीनां वैदिकपरंपराविरोधिनां परापरविद्यासु सर्वथानधिकारः। तेषां समुद्धरणायेदमभ्यर्थयामः।

कलिकृतकुमनीषागर्वदुर्वीविपाको-
न्मदजनमथनोत्थध्वांतलीढोपगूढान्।
अभित अनुकूलार्का यन्मुखांभोजवाचः
श्रुतिगतिमतितर्कैः प्रीणयंतुस्वधर्मान्॥

अध्यात्मब्रह्मविद्या तु सर्वविद्याभरणमौलिभूत उपनिषदर्थविज्ञानं परविद्यारूपा भगवन्महर्षिव्यास-सिद्धांतदर्शनानुसारेण परपक्षखंडनपूर्वकं सूचिता आत्मविद्योपायतया भगवन्महार्षि जैमिनिप्रणीता-धर्मज्ञानरूपाऽपरविद्यारूपाप्यस्माकमभिसंमता परंतु विशिष्टाद्वैताद्यधुनातनानां वादानामार्षदर्शनेषु कुत्रापि मूलमनुपलभ्य वसिष्ठहारीतपराशरादिस्मृतिषु भार्गवपुराणादिषु देवद्विजनिंदापरा बहवो विभागा विरच्य प्रक्षेपिताः येषु बहूनामपरिशीलितश्रुतिस्मृतिकानां सत्यत्वभ्रमो जायते तैः पाराशरादिस्मृतिषु यथेष्टं कल्पिता मंत्राः "श्रीमन्नारायणचरणौ शरणं प्रपद्ये" "श्रीमते नारायणाय नमः॥इति तथा"श्रीकृष्णः शरणं मम"इत्यादयो मंत्रा आनुपूर्व्या वेदबहिर्भूता अष्टाक्षराद्याः सर्वथा आर्षमूला न भवंत्येवेति सिद्धांतः॥ "विनाङ्क्येन वै विप्रो चांडालत्वमवाप्नुयात्" इत्यादिवचनात् अपराण्यपि रतिरहस्यलीलाप्रदर्शन-मंत्ररूपाणि वचनान्यनिर्वचनीयानि गायत्रीमंत्रवद्द्विजैःप्रत्यहमुपास्यमानानिपरिदृश्यंते न तानि मंत्रवचनानि वेदमूलानि न परमहर्षिप्रणीतार्षस्मृतिमूलानीति सर्वथा अवैदिकत्वमिदानींतनानां संप्रदायानां

कल्पितानामिति किं पृथक्वक्तव्यं भवेत् अथ च वेदमूलहीनानां कुमतप्रचारविलासवालानां कामिनां कुतः वेदमान्यत्वं स्यात् "नाविरतो दुश्चरितान्नाशांतो नासमाहितः" इत्यादिना कामाद्याचारस्य सर्वथा निंदितत्वात् तैः श्रुतिस्मृतिप्रतिपादिता सनातनमर्यादापिदूरतोपास्ता परिदृश्यते यतः "वैश्वदेवविशुद्धोसौ विष्णोरन्नं निवेदयेत् "यज्ञशिष्टाशिनः संतो मुच्यंते सर्व किल्बिषैः ॥ भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात्" इत्यादिस्मृतयः । श्रुतिरपि "मोघमन्नं विन्दते अप्रचेताः सत्यंब्रवीमिवधइत्सतस्य नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी" इत्यादि अकृतवैश्वदेवादिपंचमहायज्ञानां पापमात्राशित्वं वक्ति इदमुपलक्षणं श्रौतानां स्मार्तानां नित्यकर्मणां द्विजैर्नित्यकर्माण्यवश्यमनुष्ठेयानीति प्रजापतिवचनार्थः।"पंचसूना गृहस्थस्य ताभिःस्वर्गं न विंदति । पंचसूनाकृतं पापं पंचयज्ञैर्व्यपोहति" "स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत् ॥ इत्यादिश्रुतिस्मृतयोऽवैश्वदेवान्नंपापरूपमेवेत्युद्घोषयंति न तद्बधिरैः श्रूयते किं वेदा हि इष्टानिष्टप्राप्तिपरिहारानुकूलमलौकिकमुपायमुपदिशंतो जीवजातमखिलमनु-

गृह्णन्ति "प्रत्यक्षेणानुमित्या वा यस्तूपायो न वुध्यते। एवं विंदंति वेदेन तस्माद्वेदस्य वेदता ॥ न खलु ज्योतिष्टोमादिः परमेष्टहेतुः कलंजभक्षणादिरनिष्टहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति तत्र च श्रुतिलिंगवाक्य प्रमाणान्येवोपयुज्यंत अथच कर्मकांडीयश्रौतस्मार्तधर्मारंभे प्रथममेव सर्वेपि सनातनाः वेदनिष्ठाः गणेश पूंजनमविरोधेन कुर्वन्ति सर्वे लौकिका वैदिकाश्चन कदापि विप्रतिपन्ना भवंति तथा च स्मृतिः ॥ "अष्टादशपुराणेषु दशभिर्गीयते शिवः चतुर्भिर्गीयते विष्णुः द्वाभ्यां शक्तिश्च विघ्नपः" इति स्मृत्या अष्टादशपुराणेषु शिवविष्णुशक्तिगणेशानामविरोधेन प्रतिपादनमकारि भगवता व्यासेन तत्रापि "ज्येष्ठराज ब्रह्मणां ब्रह्मणस्पतिं गणानां त्वा गणपति ९ हवामहे कविं कवीनां सुपमश्रवस्तमम्" इत्याद्याः शतशः श्रुतयः श्रीगणेशाद्यपूजनमाहुः तथैव पुराणे त्रिपुरसंहारकाले श्रीमहादेवेनोक्तं "शैवैस्त्वदीयैरुत वैष्णवैश्च शाक्तैश्च सौर्यैरपि सर्वकार्ये। शुभाशुभे लौकिकवैदिके च त्वमर्चनीयः प्रथमं प्रयत्नात्" इत्यादिस्मृतिबलात् गणेशपूजनं विना न कोपि श्रौतस्मार्तकर्मारंभ इति

स्थितम् "तदा जानीहि भो योगिन् ब्रह्माकारो श्रुतेर्मुखात् । तयोः स्वामिगणेशश्च योगरूपेण संस्थितः" ॥ २ ॥ इत्यादिनापि श्रीगणेशप्रशंसनात् तद्गणेशपूजनमकुर्वाणानां विशिष्टाद्वैतादिमताभिनिवेशिनां श्रौतस्मार्तसनातन कर्ममर्यादाभ्रष्टत्वमेवेति सिद्धम् । अथच विशिष्टाद्वैतादिवादिभिः जीवेश्वरयोर्भेदः अंगीकृतः स किं स्वामिभृत्ययोरिवोपकार्योपकारकभावेन संमतः उत अग्निविस्फुलिंगयोरिवांशांशिभावेन उभयथापि न संभवति भेदस्य श्रुत्यानिरासात् 'तत्वमसि' 'अहंब्रह्मास्मीति' अभेदप्रतिपादनात् जीवो ब्रह्माभिन्नः सच्चिदानंदस्वरूपात् यन्नैवं तन्नैव मित्यनुमानाच्चात्मब्रह्मैक्यसिद्धिः जीवत्वं चात्मनि उपाधिसंबंधेन कल्पितं वस्तुतः स्वरूपेण आत्मा ब्रह्मैव नतु ब्रह्मात्मनोर्भेदः । दर्शयति च भयं श्रुतिर्भेददर्शिनः "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "य एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति" तस्मान्न जीवब्रह्मणोर्वास्तवो भेदस्तर्हि कुतस्तयोः स्वामिसेवकभावः वास्तवमुपजीव्यमानः भवतु तर्हि ब्रह्मात्मनोरंशांशिभावः "यथाग्नेर्विस्फुलिंगा व्युच्चरंति" इत्यादिश्रुत्या

"ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिस्मृत्या च जीवस्य ब्रह्मांशत्वप्रतिपादनात् नायं विचारसहः सिद्धांतपक्षः संभवति यतः निरवयवस्य ब्रह्मणो वास्तवांशासंभवात् सावयवत्वे घटवन्नाशप्रसंगात् अपि च "तत्सृष्ट्वा तदेवानुप्राविशत्" अनेन जीवेनात्मनानुप्रविश्य "नामरूपे व्याकरवाणि" इत्यादिश्रुतिभिः ब्रह्मण एव जीवरूपेण घटाकाशादिवज्जीवरूपेणावस्थानं तत्र अंशत्वकल्पनागंधोपि न युक्तः अंशत्वप्रतिपादकश्रुतस्मृतयस्तु अविद्याद्युपाधिसंबंधनिमित्तां जीवत्वकल्पनां घटाकाशवदवच्छेदवादेन जलसूर्यप्रतिबिम्बवदाभासवादेनाचक्षते वस्तुतः 'तत्त्वमसि' 'अयमात्माब्रह्म' इत्यादिश्रुतिबलात् जीवभावव्युदासेन जीवस्य ब्रह्मत्वमेव प्रतिपादयंति यथा वा सौरश्चांद्रमसो वा प्रकाश अंगुल्याद्युपाधिसंबंधेनऋजवक्रभावमिव प्रतिपद्यते यथा वाकाशादिषु घटादिसंबंधात् गमनादिक्रियावभासः कल्पते यथा वोदशरावादिकंपने सूर्यः कंपमानइव कल्पते तथा कार्यकरणसंघातरूपोपाधिसंबंधाद्ब्रह्मणि जीवभावं प्रकल्प्य प्रकाश्यकर्तृत्वभोक्तृत्वादिप्रमुखः संसारः कल्प्यते न वस्तुतः जीवत्वं संसारित्वं वा तथा च

"ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवाः॥ त्वं स्त्री पुमानसि त्वं कुमार उत कुमारी त्वं जीर्णोऽसि भवसि विश्वतो मुखः" इत्यादि श्रुतयो कल्पनयैव चारितार्थ्याः तेन ब्रह्मणो न निर्विकारस्वरूपत्वहानिः तस्मादेक एव सर्वेषां भूतानामंतरात्मा जीवभावेनावस्थित इति सिद्धम्। ननु जीवो यदि ब्रह्मरूपस्तर्हि ब्रह्मणो विधिनिषेधातीतत्वात् ब्रह्माभिन्नस्य जीवस्यापि तथात्वात् एते अनुज्ञापरिहाराः कस्य भवेयुः। तथाहि "अहरहः संध्यामुपासीत" "गृहस्थः सदृशीं भार्यामुपेयात्" 'ब्राह्मणो न हंतव्यः' 'गुर्वंगनां नोपगच्छेत्' 'न हिंस्यात्सर्वाभूतानि' "अग्नीषोमीयं पशुमालभेत" इत्यादयः सहस्रशो विधिनिषेधा अनवकाशाः प्रसज्येरन् तस्माद्विधिनिषेधाधिकारी जीवो ब्रह्मभिन्नः प्रतिक्षेत्रं भिन्नः अभ्युपेयः इत्याक्षेपे समाधानं 'देहसम्बन्धाज्ज्योतिरादिवत्' अत्र देहसम्बन्धो नाम देहादिरयं संघातः अहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः दृष्टा च सा सर्वप्राणिनाम् अहं गच्छाम्यहमागच्छाम्यहमन्धोहंबधिरो मूकोह मित्यादिरूपा न ह्यस्या भ्रांतेः सम्यग्ज्ञानादन्यन्निवारकमस्ति तस्मादविद्यानिमित्तदेहाद्युपाधिसम्बन्धा-

जीवात्मनो विधिनिषेधनियोज्यत्वमवकल्पते तादृशो-पाधिसम्बन्धनिमित्तैव सुखित्वदुःखित्वबद्धमुक्तत्वादि-व्यवस्थेत्यात्मैकत्वमनवद्यम्। 'मायाभासेन जीवेशौ करोतीति श्रुतत्त्वतः। कल्पितावेव जीवेशौ ताभ्यां सर्वं प्रकल्पितम्' इत्यादिवाक्यैर्जीवेश्वरत्वे कल्पिते एव मायया स्वाधिष्ठाने ईश्वरत्वं कल्प्यते अथवा विद्यया जीवत्वं कल्प्यते नन्वसंगस्वप्रकाशात्मनि कथम विद्याकल्पनेति चेत्, न जानामीत्यनुभवसिद्धस्य अज्ञानस्य दुरपह्नवत्वात्— " ते ध्यानयोगानुगता अपश्यन् ॥ " तथा "देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिश्रुतिप्रसिद्धश्च "अज्ञानेनावृतं ज्ञानंतेन मुह्यंति जंतवः ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्"॥ इत्यादिभगवद्गीतावचनानि श्रोत्रियब्रह्मनिष्ठोपदिष्टतत्त्वमस्यादिमहावाक्यविचारजन्यापरोक्षसाक्षात्कारेण बाध्यमानाब्रह्मस्वरूपावरकतया कल्प्यमाना मायेत्यर्थमवबोधयंति इत्येनत्सर्वमनिच्छता श्रुतिदर्शनांधेन नास्तिकेन सांख्यतार्किकवलिवर्दैन सर्वथेष्टव्यमेवेति ब्रह्मसाक्षात्कारनिवर्त्यभावरूपाज्ञानसिद्धिः नतु तर्हि जगतः बीजरूपं प्रागवस्थात्मकं अव्यक्त-शब्दार्हं भावरूपमज्ञानं वेदांतसिद्धांते अभ्युपेयते

प्रधानकारणतावाद एव सांख्यानां संमतः स्वीकृत एव यतः सांख्यैर्जगतः प्रागवस्थारूपस्य त्रिगुणात्मकभावरूपस्य प्रधानत्वेनाभ्युपगमात् अत्रोच्यते यदि वयं वेदांतिनः स्वतंत्रां कांचिज्जगतः प्रागवस्थां कारणत्वेनाभ्युपगच्छेम प्रसंजयेम तदा प्रधानकारणतावादंनच तथाभ्युपगमः परमेश्वराधीना हि जगतःप्रागवस्थाऽस्माभिरभ्युपगम्यते न स्वतंत्रा सा चावस्था श्रुतिषु कचिन्मायाशब्देन कचिदव्यक्तशब्देन कचिचाक्षरशब्देन निर्दिश्यत इति न सांख्याभिमतस्वतंत्रप्रधानकारणतावादापत्तिर्वेदांतसिद्धांतिनामिति सांख्यमतनिरासो वज्रलेपायित इत्यलं विस्तरेण।

कापालिकक्षपणबौद्धजिनादिसर्पा ।
न्निर्जित्य कंककुलिकाँश्च निरीश्वराद्यान् ॥
अन्यानि कापिलमतानि तिरस्कृतानि ।
वेदान्तशास्त्रमकरन्दतृतीयभागे ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्यआत्मानन्दसरस्वतीस्वामिभिर्विरचितो "वेदान्तशास्त्रमकरन्दे" निरीश्वरवादिसांख्यमत निरासपरोनाम तृतीयपरिच्छेदः ॥

ॐ

# वेदान्तशास्त्रमकरन्दे चतुर्थः श्रुति-सिद्धान्तपरिच्छेदः।



नन्वनेकप्राणिजीवगुणविशिष्टब्रह्मविषयकं ब्रह्मोपासनं विधीयते यथारण्याद्यनेकवृक्षविशिष्टं तत्र व्यष्टिसमष्टिभेदेन एकानेकत्वं प्रतीयते तथैव ब्रह्मणि अनेकत्वप्रतीतेः "एकमेवाद्वितीयं ब्रह्म" त्यादिश्रुतिविरोधः स्यादिति चेन्न अत्र श्रुतिसमन्वये अखण्डसच्चिदानन्दस्वरूपत्वप्रतिपादनात्संसर्गविशिष्टाद्यनर्थासम्भवस्यैव ब्रह्मणि पर्यवसितत्वात्। ननु सत्यादिपदानामनेकलक्षणत्वात्तेषां ब्रह्मलक्षणाङ्गीकारे बहुत्वं स्यादिति चेन्न। एकब्रह्मतात्पर्यप्रतिपादकत्वेन अखण्डैकब्रह्मबोधकत्वात्॥ तथाचोक्तमाचार्यैः श्रुतिस्तात्पर्यदृष्ट्या भागत्यागलक्षणया ब्रह्म बोधयति ननु वेदांतानां कर्तृदेवतादिप्रतिपादकविधिसापेक्षत्वेनार्थवादत्व कथं न स्या दिति चेन्न अपूर्वार्थप्रतिपादकत्वेन सापेक्षत्वाभावात्परम पुरुषार्थतायाः परब्रह्मप्रकरणस्थत्वाच्च। विधिरहितानामपि तेषां तात्पर्येण परिपूर्णब्रह्माखण्डैकत्वप्रतिपादि-

तान्वितार्थे शक्तिग्रहादपि वेदान्तानां विध्यपेक्षितत्वं नास्ति प्रकरणान्तरसिद्धत्वेन तत्प्रतिपादितप्रमेयानां न संभवति स्वप्रकरणस्थत्वेन प्राधान्यात्। अपूर्व-प्रतिपादकत्वेन च सापेक्षत्वाभावात् केवलान्वयित्वे शक्तिग्रहदर्शनात्। तस्मान्न क्रियापरा वेदांताः। रज्जुरियं नायं सर्प इति सिद्धबोधेनापि दुःखनिवृत्ति-दर्शनात्। ननु वेदान्तेभ्यो ब्रह्मसिद्धिमिच्छतां वृत्ति-काराणां भर्तृप्रपञ्चादीनामुपासीत ध्यायीत इत्याद्यु-पासनाविधीनां विषयतया वेदान्तबोधकानामुपासना-बोधकत्वेन कथं स्वार्थसिद्धिरिति चेन्न सर्वसाक्षितया नित्यचिद्रूपपरिपूर्णब्रह्मातिरिक्तवस्त्वभावान्मुख्याद्वैत एव वेदान्तमहावाक्यानां तात्पर्यात्सर्वतत्त्वज्ञानामपि तत्रैव संमतत्वाच्च। उपासनापरत्वे हि गौणत्वमन-र्थत्वं च स्याद्वेदान्तानान्तच्चानिष्टं सर्वविवेकिनाम्। तथाचोक्तं सर्वतत्त्वविच्छ्रेष्ठवार्तिककारैः। "भावनाजं फलं यत्स्यात् यच्च स्यात्कर्मणः फलम्॥ न तत्स्था-यीति मन्तव्यं परस्त्रीगमनं यथा॥" तस्मान्नोपास-नाबोधकत्वमपि मुख्यत्वेन वेदान्तानाम्। ज्ञानस्य वस्त्वधीनत्वादपि तथाहि। यद्वस्तु यादृशं वर्तते तद्विषयकं ज्ञानमपि तादृगेव जायते तदेव च प्रमा-

ज्ञानं वस्तु नान्यथा करोति घटज्ञानं घटाकारमेव जायते न पटाकारं यथार्थबोधो हि प्रमा । अनधिगताबाधितज्ञानत्वं स्मृतिव्यावृत्तं तु व्यावहारिकम् नच वेदान्तानां कर्मोपासनबोधकत्वं मुख्यं सर्वतत्त्वज्ञसंप्रदायबहिर्भूतत्वात् । अहं ब्रह्मास्मीति ज्ञानस्य ज्ञानातिरिक्तकालाव्यवधानतया जायमानत्वेनाविद्याध्वंसकत्वाद्बाधकत्वाच्च न कर्मोपासनाबोधकत्वं वेदान्तानामपि तु प्रत्युत द्वैतस्योपमर्दकत्वमेव एवं च यादृशं ब्रह्म अद्वितीयं वस्तु परिच्छेदरहितं शुद्धमस्ति तदेव वृत्तिज्ञानमहं ब्रह्मास्मि बोधयति चिन्मात्रं सन्तं ब्रह्माद्वितीयं जडं द्वितीयभेदसहितं जीवभिन्नं सन्तं ब्रह्माभिन्नत्वेन बोधयेच्चेत्तदा वेदान्तानां प्रामाण्यमेव व्याहन्येत द्वैतस्य स्वयमेव सर्वलोकसिद्धत्वादयमस्मात्पृथगिति वेदान्तानामपूर्वत्वं च न सिद्ध्येत् यथाचोक्तं भगवता वेदव्यासेन महाभारते "अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति । श्रुत्यामप्येवमुक्तम् " तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" इति आत्मा सच्चिदानन्दाद्वितीयः कर्तृत्वभोक्तृत्वरहितस्तं विपरीतं मन्यमाना आत्महनो भवन्तीति श्रुत्यर्थः क्रियावि-

तान्वितार्थे शक्तिग्रहादपि वेदान्तानां विध्यपेक्षितत्वं नास्ति प्रकरणान्तरसिद्धत्वेन तत्प्रतिपादितप्रमेयानां न संभवति स्वप्रकरणस्थत्वेन प्राधान्यात्। अपूर्व-प्रतिपादकत्वेन च सापेक्षत्वाभावात् केवलान्वयित्वे शक्तिग्रहदर्शनात्। तस्मान्न क्रियापरा वेदांताः। रज्जुरियं नायं सर्प इति सिद्धबोधेनापि दुःखनिवृत्ति-दर्शनात्। ननु वेदान्तेभ्यो ब्रह्मसिद्धिमिच्छतां वृत्ति-काराणां भर्तृप्रपञ्चादीनामुपासीत ध्यायीत इत्याद्यु-पासनाविधीनां विषयतया वेदान्तबोधकानामुपासना-बोधकत्वेन कथं स्वार्थसिद्धिरिति चेन्न सर्वसाक्षितया नित्यचिद्रूपपरिपूर्णब्रह्मातिरिक्तवस्त्वभावान्मुख्याद्वैत एव वेदान्तमहावाक्यानां तात्पर्यात्सर्वतत्त्वज्ञानामपि तत्रैव संमतत्वाच्च। उपासनापरत्वे हि गौणत्वमन-र्थत्वं च स्याद्वेदान्तानान्तच्चानिष्टं सर्वविवेकिनाम्। तथाचोक्तं सर्वतत्त्वविच्छ्रेष्ठवार्तिककारैः। "भावनाजं फलं यत्स्यात् यच्च स्यात्कर्मणः फलम्॥ न तत्स्था-यीति मन्तव्यं परस्त्रीगमनं यथा॥" तस्मान्नोपास-नाबोधकत्वमपि मुख्यत्वेन वेदान्तानाम्। ज्ञानस्य वस्त्वधीनत्त्वादपि तथाहि। यद्वस्तु यादृशं वर्तते तद्विषयकं ज्ञानमपि तादृगेव जायते तदेव च प्रमा-

ज्ञानं वस्तु नान्यथा करोति घटज्ञानं घटाकारमेव जायते न पटाकारं यथार्थबोधो हि प्रमा । अनधिगताबाधितज्ञानत्वं स्मृतिव्यावृत्तं तु व्यावहारिकम् नच वेदान्तानां कर्मोपासनबोधकत्वं मुख्यं सर्वतत्त्वज्ञसंप्रदायबहिर्भूतत्वात् । अहं ब्रह्मास्मीति ज्ञानस्य ज्ञानातिरिक्तकालाव्यवधानतया जायमानत्वेनाविद्याध्वंसकत्वाद्बाधकत्वाच्च न कर्मोपासनाबोधकत्वं वेदान्तानामपि तु प्रत्युत द्वैतस्योपमर्दकत्वमेव एवं च यादृशं ब्रह्म अद्वितीयं वस्तु परिच्छेदरहितं शुद्धमस्ति तदेव वृत्तिज्ञानमहं ब्रह्मास्मि बोधयति चिन्मात्रं सन्तं ब्रह्माद्वितीयं जडं द्वितीयभेदसहितं जीवभिन्नं सन्तं ब्रह्माभिन्नत्वेन बोधयेच्चेत्तदा वेदान्तानां प्रामाण्यमेव व्याहन्येत द्वैतस्य स्वयमेव सर्वलोकसिद्धत्वादयमस्मात्पृथगिति वेदान्तानामपूर्वत्वं च न सिद्ध्येत् तथाचोक्तं भगवता वेदव्यासेन महाभारते "अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति । श्रुत्यामप्येवमुक्तम् " तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" इति आत्मा सच्चिदानन्दाद्वितीयः कर्तृत्वभोक्तृत्वरहितस्तं विपरीतं मन्यमाना आत्महनो भवन्तीति श्रुत्यर्थः क्रियावि-

लक्षणत्वादप्यात्मस्वरूपस्य वेदान्तानां कर्मोपासनबोधकत्वं मुख्यत्वेन न संभवति तथा हि नात्मनःकर्मत्वं क्रियाजन्यफलशालित्वाभावादसङ्गत्वाच्च । यथा घट उत्पत्त्यादिक्रियाशाली न तथात्मा मूर्त्तत्वाभावाद्व्यापकत्वाच्च। आत्मन्युत्पत्त्यादिक्रियाफलसंबन्धाभावात्सर्वसाक्षित्वादात्मत्वादेव च कर्मत्वाभावस्तथैव न विकार्यत्वमप्यात्मनः अन्यथाभावो विकारस्तद्वान्विकार्यो यथा दुग्धाद्दधि अविकृतपरिणामोपि न संभवति,कटकादिवत् तत्रापि क्रियासत्त्वनाविकारित्वं न सम्भवति किंच स्वप्नरज्जुसर्पादिवच्च ब्रह्मविवर्त्तोऽयं प्रपञ्चः अतात्त्विकान्यथा भावो विवर्त्त इति लक्षणसत्त्वात् गुणाधानलक्षणसंस्काराऽभावान्न गुणाधानमात्मनस्तद्धि गुणाधानं नाम गुणोत्पादनं यथोपनयनसंस्कारादिना द्विजन्मनो वेदाध्येतृत्वरूपगुणाधानं न तथात्मनो ह्यसङ्गत्वात् । नापि दोषापनयः संस्कारो ब्रह्मणो यथादर्शे मलनिवृत्तिरूपा क्रिया सम्भवति न तथात्र तस्य सदाशुद्धत्वादात्मनो "नित्यशुद्धमुक्त" इत्यादिश्रुतेः । तथै "वैकमेवाद्वितीय" मित्यादिश्रुत्यात्मनोऽद्वितीयत्वाच्च न वेदान्तानां कर्मोपासनाप्रतिपादकत्वं किन्त्वखण्डैकरससच्चिदानन्दाद्वितीयबोधक-

त्वमेवेति ब्रह्मसमन्वयबोधपदार्थ इति यावत् । तस्मादुपक्रमादिलिङ्गैर्वेदान्तानां ब्रह्मपरत्वमेवेति सिद्धम् । उपक्रमे हि" सदेव सौम्येदमग्र आसीत् ""एकमेवाद्वितीयम्" "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिषत्" "अयमात्मा ब्रह्म सर्वानुभूः" " ब्रह्मैवेदममृतं पुरस्ता" दित्याद्याः श्रुतयस्तदर्थश्च सदित्यस्तिमात्रं बोध्यते।एवेत्यवधारणे॥किं तदवध्रियते तदाह इदमिति। यदिदं व्याकृतं जगदग्रे उत्पत्तेः प्राक् सदेव आसीत् अव्याकृतं सत् कारणात्मकं सदेव आसीदित्यर्थः । हे सौम्य प्रियदर्शनेति पित्रा पुत्रः संबोध्यते । बुद्धिग्राह्यं स्थूलं पृथिव्यादिप्रागुत्पत्तेर्माभूदन्यत्तु महदादिसूक्ष्ममासीदेवेति नेत्याह एकमिति।सतोऽन्यत्कार्यं नासीदेवेत्यर्थः । तथापि मृदो घटाकारपरिणामयितृकुलालवज्जन्यानिमित्तं सतोऽन्यदासीत्याशंक्याह अद्वितीयमिति सतोऽपि चित्त्वं विना प्रधानवन्न हेतुतेत्याशंक्य श्रुत्यन्तरमुदाहृतम् । "आत्मा वा इदमिति" आप्नोतीत्यात्मा मूलकारणम् । वैशब्देन प्राग्वत्स्मर्यते अवशिष्टमुक्तार्थम् । तस्य निर्विशेषत्वार्थं श्रुत्यन्तरं तदेतदिति तच्छब्देन, 'इंद्रो मायाभि' रिति प्रकृत्यात्मोक्तः विधेयं ब्रह्मापेक्ष्यन-

पुंसकमेतद् यत्तद् ब्रह्मेत्यर्थः । तत्किं लक्षणं तत्राह अपूर्वमिति । पूर्वं कारणं यस्य नास्ति तदपूर्वमकार्यमित्यर्थः । अपरं कार्यं वास्तवं यस्य नास्तीत्यनपरमकारणमित्यर्थः अनन्तरं नाम जात्यन्तरालमन्तराले यस्य नास्तीत्यनन्तरमेकरसमित्यर्थः । इत्येवं वैदिकलौकिकप्रतिपादितोऽद्वैतसिद्धान्त आत्मज्ञानफलप्राप्तिरनेकजन्मार्जितपुण्यपुञ्जपरिपाकवशादात्मैक्यज्ञानं शुद्धविद्योपासनया च लभ्यते तत्र प्रमाणानि यथा "आचार्यवान्पुरुषो वेद" 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' 'श्रद्धावाँल्लभते ज्ञानं' 'ज्ञानिनो लभन्ते मोक्ष'मित्याद्याः श्रुतिस्मृतयोऽपि बहुशः गायन्ति मोक्षधर्मान् । ज्ञानपरिपाकदशायां जीवन्मुक्तिः श्रुतिस्मृत्युक्तक्रमेण गुरुमुपसृत्य तत्प्रसादात्तदुपदेशेन ब्रह्म तत्पदार्थं त्वंपदार्थं च विचिन्त्य वेदान्तप्रतिपादनानुकूलप्रमाणसाध्यसामानाधिकरण्यन्यायेन ब्रह्मणि पर्यवसितो भवेत्कृतकृत्यश्च भवेत् तत्र स्मृतिप्रमाणमवतरति 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति । अन्ये तु 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति

चोदितानामपि कर्मणां संयोगपृथक्त्वे ब्रह्मभावनां ज्योतिष्टोमादि-कर्मणां निश्चितवेदान्तस्य स्वर्गाद्यल्पफलकामनाया निरावरणं निश्चित्य 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'वेदान्तविज्ञानसुनिश्चि-तार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्याद्याः श्रुतिस्मृतयः ज्ञानकाले ब्रह्माभ्यासप्रवृत्तानां मुमुक्षूणां त्याग एव कर्मणां स्वल्पकालसुखदातृत्वेन तुच्छत्वा-दित्यत्र पूर्वोक्तप्रमाणानीति वदन्ति। अतएव 'आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चने' त्यादिश्रुतेः साक्षा-त्कारप्रमाणमंगीकृत्य पराविद्याविषयब्रह्मविज्ञानार्थमु-त्तरो ग्रन्थ आरभ्यते ननु 'ऋणानि त्रीण्यपाकृत्ये' ति मनुवचने कर्मज्ञानयोरपाकृत्येति ल्यबन्तेन पौर्वा-पर्यभावो द्योत्यते तथा च ऋणमोचनकर्तॄणां कर्मणां पूर्वापेक्षितत्वे भाष्यकारेणेदं प्रागधीतवेदान्तस्य ब्रह्म-जिज्ञासोपपत्तेरिह क्रमविवक्षा नास्तीत्युक्तं तन्न सङ्गच्छेतेति चेन्न शुकादिजीवन्मुक्तादीनां कर्मादि-कस्य गुरुवेदान्तश्रवणादिकस्य वातीतजन्मनि समा-प्तत्वान्नास्मिञ्जन्मनि ऋणानुबन्धनं केवलात्मनि-ष्ठया तल्लाभादिति तद्विषये तथात्वेपि सर्वत्रैवं

वक्तुमशक्यत्वादन्तःकरणशुद्धिद्वारा पूर्वं कर्मण उपयोगात्तदनन्तरं ज्ञानप्राप्तेश्च । "आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः" "तरति शोकमात्मवित्" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिश्रुतिप्रामाण्येन शेषशेषित्वाधिकृते फलजिज्ञास्यभेदाच्चेत्यादिनानुगृहीता महान्तो ज्ञानिनस्तथापि कर्मब्रह्मविद्याफलयोर्वैलक्षण्येपि शरीरं वाचिकं मानसं च कर्मश्रुतिस्मृतिसिद्धं धर्माख्यं यद्विषया जिज्ञासा ब्रह्मणि पर्यवसितेत्युक्तत्वात् "अविद्यापनयनन्तरेणानाविर्भावा" दितिश्रुत्युक्तेश्च कर्मज्ञानप्रतिपादनपरयोः श्रुत्योर्विरोधपरिहारः सुस्पष्ट एवेति विदाङ्कुर्वन्तु किंच ब्रह्मोपासनपरत्वे वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिब्रह्मात्मता जीवस्य स्वाभाविकीत्यवगतेपि "मुने तथैव तिष्ठामि कृपणः किं करोम्यह" मिति योगवासिष्ठे उपशमप्रकरणस्यावसाने वसिष्ठं प्रति रामचन्द्रेणोक्ते "परव्यसनिनी नारी व्यग्रा हि गृहकर्मणि । तदेवास्वादयत्यन्तः परसंगरसायनम् ॥ एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः । तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि" ॥ इति वसिष्ठोक्तिमवलम्ब्य ज्ञानकालेपि तथैव व्यवहरन्नपि न दोषभागित्यनुसन्धेयम्

तत्र परतत्त्वज्ञानं द्विविधं स्थितमस्थितं चेति "स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्" इत्यर्जुनोक्ते "प्रजहाति यदा कामान्सर्वान्पार्थमनोगतान्।आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते" इति भगवतोक्ते बुद्धेः परमानन्दरूपेणात्माभिमुखत्वात्तथावगन्तव्यम् । न चात्र संप्रज्ञातसमाधाविव आत्मानन्दो मनोवृत्त्युपाख्यालभ्यः किन्तु स्वप्रकाशचिद्रूपेणात्मना सन्तोषश्च न वृत्तिरूपः अपि तु तत्संस्काररूपस्तथा चैवंविधैर्लक्षणवाचकैः शब्दैः समाहितं भगवता भाष्यते "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥" अत्र किमाशयेन भगवतोक्तमिति विचारे दुःखं रागादिनिमित्तजन्यरजोगुणविकाररूपा सन्तापात्मिका प्रतिकूला चित्तवृत्तिः । तादृश्ये दुःखे प्राप्ते सत्यहं पापी धिङ्मां दुरात्मानमित्यनुसन्तापात्मिका तमोगुणविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्वेगः । "प्राक्संस्कारपरम्परापरिणतं प्रायो मनः प्राणिनां कस्तेभ्यः प्रकृतिं निरस्य सहजां कर्त्तान्यथा स्यान्नरः ॥ दौर्गन्ध्यं लशुनादिकस्य सहजं यत्नात्समुन्मार्ययेत्सौरभ्यं वितनोति कः सुरभितां कर्पूरमुख्यस्य वा ॥

तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादा-त्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥" इति भगवदुक्तेश्चानेकशः श्रुतिस्मृतिसिद्धान्तपरैर्वाक्यैः संन्यास एव प्रतिपादित इति प्रतीयते ननु अदृष्टविषय-चोदनाप्रामाण्यादात्मकर्त्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत इति चेन्न अविद्याकृतात्मकत्वात्तेषां न गौणा-आत्मनो देहेन्द्रियादयः किन्तर्हि मिथ्याप्रत्ययेनैवासंग-स्यात्मनः सङ्गात्मत्वमापद्यन्ते तद्भावे भावात्तदभावे चाभावात् । अविवेकिनां ह्यज्ञानकाले बालानां दृश्यते दीर्घोहं गौरोहमिति देहादिसंघातेहंप्रत्ययो नतु विवेकिनामन्योऽहं देहादिसंघातादिति ज्ञानवतां तत्काले देहादिसंघातेऽहंप्रत्ययो भवति । तस्मान्मि-थ्याप्रत्ययाभावेऽभावात् तत्कृत एव न गौणः । कर्म-विधिश्रुतिवद्ब्रह्मविद्याविधिश्रुतेरप्रामाण्यप्रसंग इति चेन्न बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्या-विधिश्रुत्यात्मन्यवगते देहादिसं घातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मावगतिर्न केनचिदपि बाधितुं शक्या फलव्यतिरेकावगतेर्यथाग्निरुष्णः प्रकाश-कश्चेति । नच कर्मविधिश्रुतेरप्रामाण्यं पूर्व-पूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वप्रवृत्तिजन्यस्य प्रत्यगा-

अन्तरंगज्ञानदशायां "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" "अजो नित्यः शाश्वतोयं पुराणः" 'आकाशवत्सर्वगतश्च नित्यः' 'क्षेत्रं क्षेत्री यथा कृत्स्नं प्रकाशयति भारत' 'नित्यस्सर्वगतः स्थाणु' रित्यादिश्रुतिस्मृतिभिरात्मनश्चेतनत्वनित्यत्वावगमात् । तद्वैपरीत्यानुभवादज्ञानमनात्मैवेति सिद्धम्। एतेन शून्यमात्मेति प्रत्युक्तम्। तस्यापि साक्षिभास्यत्वात् । कथं पुनर्देहादीनामहमनुभवविषयत्वादनात्मत्वमुच्यते । देहादीनां चिदात्मनश्चान्योन्याध्यासादेहादीनामहमनुभवाविषयत्वं सूक्ष्मदेहे तददर्शनात् । अन्यथान्यत्रापि प्रसंगात् । तस्मादहंकारादिष्वात्मत्वानुसन्धानमयथार्थात्मस्मरणमिति सर्वं निरवद्यम् ॥ कस्तर्हि आत्मेति चेत् "त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोहं सदाशिवः ॥ साक्षी चेता केवलो निर्गुणश्च" इत्याद्या देहाद्यज्ञानान्तविलक्षणं स्वप्रकाशं चिद्रूपं साक्षिणं दर्शयन्ति तत्र प्रमाणं यथा–"अज्ञानतत्कार्यतदीयभेदादध्यक्षयन्ती निजसत्तयैव । स्मर्तुं च विस्मर्तुमहो न शक्या सुप्त्यादिषु स्वप्रभयास्मि सच्चित्" ॥ अकर्त्तेति भग-

वताप्युक्तः "प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः । यः पश्यति तथात्मानमकर्त्तारं स पश्यति॥" "अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोपि कौन्तेय न करोति न लिप्यते" ॥ इति च तस्मादसङ्गश्चिद्रूपः "स्वप्रकाशो ह्यकर्त्ता" इत्यादिश्रुतिप्रतिपादितः । कस्तर्हि कर्त्तेति विचारिते "साभासान्तःकरणमहंकारः कर्त्तेति वदामः" । "स्मृतिभिन्नं ज्ञानमनुभूतिः यथार्थश्चायथार्थश्चेति भेदाद् द्विविधा सा निरूपिता" "बाधितविषयानुभूतिरयथार्था" "तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ॥ एतदेकपरत्वं च ज्ञानाभ्यासः प्रकीर्त्तितः" इत्येवं यथार्थप्रज्ञया बोधाभ्यासो जायत इति सिद्धमत्र प्रमाणमाह स्मृतिः "सर्गादावेव नोत्पन्नं दृश्यं नास्तीति सर्वथा । इदं जगदहं चैव बोधाभ्यासं विदुः परम् ॥" इति कारणस्मृतिरत्रानुसन्धेया । "नित्यकर्म परित्यज्य वेदान्तश्रवणं विना । वर्त्तमानस्तु संन्यासी पतत्येव न संशयः ॥" इत्यकरणे प्रत्यवायश्रवणात् । "आसुप्तेरामृतेःकालं नयेद्वेदान्तचिन्तया ।" इति स्मृत्या "यावज्जीवमग्निहोत्रं जुहुयादि"ति यथा गृहस्थस्य तथा "निद्राया लोकवार्त्तायाः शब्दादेरात्मविस्मृतेः ।

कांचिन्नावसरं दत्त्वा चिन्तयात्मानमात्मनि" ॥ "ते ब्रह्मलोके तु परान्त्यकाले परामृतात्परिमुच्यन्ति सर्वे" इत्याद्याः श्रुतिस्मृतयः आत्मप्राप्तये यतनशील-मुमुक्षूणां श्रवणादिसाधनेन परप्राप्तिरित्यत्र प्रमाण-भूताः संन्यासिनां नित्यकर्त्तव्यतां बोधयन्तीत्यवगन्त-व्यम् । कैमुतिकन्यायेन वेदान्तसिद्धान्तादर्शविधिका-ण्डनिष्ठानां साध्यतया वेदान्तश्रवणमनननिदिध्यासन-मेव कुर्यादिति नियमविधिरत्रानुसन्धेयः । वेदान्तश्रव-णव्यतिरिक्तं न कुर्यादितिपरिसंख्याविधिर्वा तदुक्तम् । "नियमपरिसंख्या वा विध्यर्थो हि भवेद्यतः । अना-त्मदर्शनेनैव परात्मानमुपास्महे" ॥ "यतो वाचो निवर्त्तन्ते" "यन्मनसा न मनुते येनाहुर्मनो मत" मित्यादिश्रुत्या ब्रह्मणो वेदान्तव्यतिरिक्तवाङ्मनसो-रविषयतायाः कथनेन तज्ज्ञानं प्रति साध-नत्वायोगादिति बालाः प्रवदन्ति न ज्ञा इति विस्पष्ट-मामनन्ति । "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "तथा नातः परं वेदितव्यं हि किंचित्""तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्याद्याः श्रुतयः "कषाये कर्मभिः पक्वे तपोज्ञानं प्रव-र्त्तते" इति स्मृतिश्च मुमुक्षोर्वेदान्तश्रवणे मनसि ज्ञान-

वैराग्याभ्यां निदिध्यासनेन साक्षात्कारे सति संसार-निवृत्तिरानन्दावाप्तिश्च भवतीति बोधयन्ति तदा "ब्रह्म-विद् ब्रह्मैव भवती" त्यपरोक्षसाक्षात्कारेण परमात्मनि सजातिमत्त्वेन एकत्वमात्मैक्यं वेदान्त-सिद्धान्तपर्यव-सितं "नावेदविन्मनुते तं बृहन्त" मित्याद्युक्तार्थं बोधयतीत्यर्थः ।"त्वंपदार्थविवेकाय सन्न्यासः सर्वकर्म-णाम्। श्रुत्याभिधीयते यस्मात्तत्त्यागी पतितो भवेत्"॥ इत्यादिवचनकदम्बैर्वेदान्तविचारमन्तरा क्षणमपि सन्न्यासिभिर्न स्थेयमि ति प्रतिपादितं भवति तथैव "विदित्वा मुनिर्भवती" त्यत्र क्त्वाप्रत्ययस्य ज्ञानोत्तरका-लवाचकत्वेन तादृशज्ञानसम्पन्नब्राह्मणे मुनित्वप्रतिपा-दकपरं वाक्यं ब्राह्मणशब्दो न जातिवाचकः ब्रह्मविद्वा न्विनो ब्राह्मणशब्दस्य वाचःप्रसङ्गाद्वाक्यशेषे पाण्डि-त्यबाल्यमौनशब्दाभिधेयैः श्रवणमनननिदिध्यासनैः साध्यब्रह्मसाक्षात्कार इत्यभिप्रेत्य ब्राह्मण इतिपदस्या-भिहितत्वाच्च । अन्यथा कथमथ ब्राह्मण इति साधना-नुष्ठानोत्तरकालवाचिशब्दं प्रयुञ्जीत । अथ मुनित्वं मननशीलत्वं तच्चासति कर्त्तव्यान्तरे एव संभवतीत्य-र्थाचादृशः संन्यासस्तस्य चेयं कर्त्तव्यतेति स्पष्टमेवा-भिहितत्वादिति विद्वत्सन्न्यासो विविदिषा सन्न्यासश्च

स्पष्टं निर्दिष्टः संगच्छते नत्वत्र मुनित्वेन फलेन प्रलोभ्य विविदिषा सन्न्यासादयं फलरूपसन्न्यास इति ब्रूमः । किन्तु सम्यगनुष्ठितश्रवणमनननिदिध्यासनैः परतत्त्वं विदितवद्भिः सम्पाद्यमानो विद्वत्संन्यासो भिन्न एव इति । तत्रतत्र प्रमाणं यथा "संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमास्थिताः ॥ प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ इत्येवंविधानि वाक्यान्यनुसन्धेयानि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥" इत्यादीनि स्मृतिवाक्यान्यप्यवगन्तव्यानि।त्वंपदतत्पदार्थबोधे स्थाणुर्वा पुरुषो वेतिवदात्मसंशयो ह्यनेकविधस्तथाहि ब्रह्माद्वितीयं सद्वितीयं वा तत्राद्वितीयत्वे श्रुतिसिद्धान्ता अनेकशः । आत्मा देहाद्यतिरिक्तो न वा देहाद्यतिरिक्तत्वेऽपि कर्त्ता अकर्त्ता वा अकर्तृत्वेऽपि चिद्रूपोऽचिद्रूपो वा चिद्रूपत्वेपि आनन्दात्मको न वा इत्यादित्वंपदवाच्यजीवगतःसंशयः सम्भवति जीवस्य सच्चिदानन्दरूपत्वेऽपि परमात्मना सहैक्यं सम्भवति न वेति चरमः संशयस्तथाच तत्र द्वैतमोहनिद्रान्तर्गतप्रमाधिव्याधिगतानां हस्ताभ्यां

विमृश्य नेत्रे निमील्य सर्वोऽप्येष प्रलापस्तस्यैतस्याष्टवि-
धसंशयप्रश्नस्य वेदान्तशास्त्रविचारमन्तरा नेत्रयोरु-
न्मीलनमशक्यमेतदर्थमुत्तरमीमांसाशास्त्रमकरन्दाशयः
प्रभवति नान्यस्तथाहि "सदेव सौम्येदमग्र आसीत्"
"तत्त्वाच्चापरस्ये" ति श्रुतिसूत्राभ्यां प्रागुत्पत्तेः कार्यस्य
कारणात्मना सत्त्वप्रतिपादनेन प्रागभावस्य दुर्निरू-
पितत्वात्प्रागात्मज्ञानात्कार्यस्य निरन्वयनाशानङ्गीका-
रेण ध्वंसस्यापि दुर्निरूपितत्वमवसेयम् ।

तदुक्तम् ।

"स्वानुभूतावविश्वासे तर्कस्याप्यनवस्थितेः । कथं वा
तार्किकम्मन्यस्तत्त्वनिश्चयमाप्नुयात ॥" तस्मात्प्रति-
योग्यैक्येपि प्रमाणबलेन प्रागभावादिभेदासिद्धिरना-
दिनित्ये त्रैकालिकात्यन्ताभावान्योन्याभावसत्त्वेऽद्वैत-
श्रुतिविरोधापत्तेरतोऽत्यन्ताभाव एक एव "नेह ना-
नास्ति किंचने"त्यादिश्रुतिप्रतिपादितः प्रपञ्चात्यन्ता-
भावः पारमार्थिकः स चाधिष्ठानस्वरूपोऽधिष्ठानाति-
रिक्त इति केचित् । घटाद्यत्यन्ताभावो व्यावहारिकः
इयमेव भेदप्रतियोगिकभूतले भूतलं घटो नेत्यादि-
प्रतीतिः। ब्रह्मज्ञाने निवर्त्यत्वात्सर्वेप्यनित्या एव । अन्ये
तु लौकिकतन्त्रान्तरबुद्धिमनुसरन्तो जैमिनिवात्स्या-

यनन्यायतर्कवार्तिककारादयः केवलं मोहभ्रमसाहसादीनङ्गीकुर्वन्तस्तिरस्कारमेवार्हन्ति भूय इति वेदान्तिनां मतगर्भितमपि च परोक्षप्रमयाऽसत्त्वापादकमौढ्याज्ञाननिवृत्तिरपरोक्षप्रमया चाभानापादकाज्ञाननिवृत्तिरिति परमप्रयोजनमुपवर्णितमेतावताग्रन्थसन्दर्भेण तदुक्तम् "भिन्नप्रकरणाल्लिंगषट्काच्च ब्रह्मबोधकाः । सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽत्र किम् ॥" इति ब्रह्मनिष्ठाविषयविवेचने ब्रह्म सर्वज्ञं सर्वशक्तिसमन्वितं जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते इति बोध्यम् । एवं वेदान्तशास्त्रश्रवणमनननिदिध्यासनैर्ब्रह्मावगतौ चित्तैकाग्र्यापेक्षतया तादृशचित्तशुद्धिसम्पादने कर्मोपासितप्रतिपादकवाक्यैः कर्मण उपासनायाश्च साधनत्वं बहुशः पूर्वं समर्थितं तद्वद्योगस्यापि योगवासिष्ठोक्तवासिष्ठरामचन्द्रसंवादेऽनेकशः प्रमाणभूतानि वाक्यान्युपलभ्यंते तत्रापि श्रौतस्मार्तकर्मकाण्डे कौलमार्गस्य यथा निन्द्यत्वं तथैव ऋतम्भरप्रज्ञानयोगे हठयोगभागो निन्द्य एवेत्यपि प्रदर्शितं योगस्यावश्यकत्वप्रतिपादकप्रमाणान्तराणि यथा "उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना । तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ॥ यदा पश्चावति-

छन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥" अन्यत्रापि सूत्रकारभाष्यकाराभ्यामुदाहृतनामधेयलक्षणाभ्यां "प्रत्यक्षानुमानागमाः प्रमाणानी"ति प्रदर्श्य प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपपंचवृत्तिनिरोधसाधनं सूत्रयति स्म भगवान्पतञ्जलिः "अभ्यासवैराग्याभ्यां तन्निरोधः" अस्मिन्सूत्रे यथा तीव्रवेगोपेतं नदीप्रवाहं सेतुबन्धनेन निवार्य कूल्याप्रणयनेन क्षेत्राभिमुखं यस्तिर्यक्प्रवाहांतर उत्पाद्यते तथा वैराग्येण चित्तनद्या विषयप्रवाहं निवार्य समाध्यभ्यासेन प्रशान्तः प्रवाहः सम्पाद्यते । मंत्रजपदेवताध्यानादीनां क्रियारूपत्वेनावृत्तिलक्षणोभ्यासः संभाव्यते स एव पूर्वाभ्यासः । तेन दृढीकृतचित्तानां पूर्वसाधननिरपेक्षया सर्वव्यापारोपरतस्य दृढभूमिकायां स्वयमेव समाधिर्भवेत् अस्मिन्पक्षे ज्ञानयोगप्रामाण्यसिद्धिः । तथाचोक्तं" संशान्तदुःखमजडात्मकमेकरूपमानन्दमन्थरमपेतरजस्तमो यत् ॥ आकाशकोशतनवोतनवो महान्तस्तास्मिन्पदे गलिताचित्तलवा भवन्ति" ॥ अन्यत्र स्मृतौ

" जीवन्मुक्ता न मुह्यन्ति सुखदुःखरसस्थितौ । प्राक्तेनार्थकारेण किञ्चित्कुर्वन्ति वा न वा ॥ इत्यादिषु स्पष्टमेव प्रदर्शितं तस्मादिदानीन्तनकाले योगाभ्यासशीलिनां ज्ञानसाधनत्वेन वासनाक्षयमनोनाशप्रसक्त्या बहुकालाभ्यासेन जीवन्मुक्तिसिद्धौ प्रारब्धकर्मभोगक्षये कालान्तरेण कैवल्यप्राप्तिरिति व्यवस्था वर्णिता अनेनैवाशयेन श्रु तिः "तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा" इत्यादि स्पष्टमेव ननु " वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत । अनुष्ठानोपयोगित्वात्कर्त्रादिप्रतिपादकाः ॥ " इत्याधिकरणे वेदान्तानां कर्तृदेवतादिप्रतिपादकत्वेन कर्मप्रतिपादकत्वमेव कुतो न ततश्च ब्रह्मबोधकत्वं कथमिति स्पष्टमभिहितत्वात् किंच "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" इति वेदान्तानामपि शास्त्रत्वात्प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्यं न प्रवृत्तिनिवृत्तिशून्यसिद्धब्रह्मपरतया "तद्भूतानां क्रियार्थेन समाम्नायः" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना" मिति सूत्राभ्यां प्रतिपादना-

त्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति चेन्न वेदान्ताः न विधिपराः स्वार्थे फलवत्त्वे सति नियोज्यविधुरत्वान्नायं सर्प इति वाक्यवदित्यनुमानेन विधिपरत्वस्य निराकरणात् "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" इत्यादि ब्रह्मात्मैकत्ववस्तुपराणां श्रुतीनां समन्वयानुपपत्तेश्च तस्माद्विधिवाक्यवन्न पुरुषव्यापारतन्त्रा ब्रह्मविद्या किन्तु प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रेति सिद्धं ब्रह्मणः शास्त्रैकप्रमाणकत्वं यस्माद्योहि बहिर्मुखः प्रवर्तते पुरुषः नच तत्रात्यान्तिकं पुरुषार्थं लभते तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्त्तयन्ति विधिच्छायानि "आत्मावारे द्रष्टव्यः" इत्यादिवाक्यानि अन्तर्मुखेन कृतवेदान्तविचारः सर्वानर्थहानाय जीवन्मुक्तिसुखावाप्तये च भवति । तत्त्वज्ञानमनोनाशवासनाक्षयैर्जीवन्मुक्तस्तदुक्तं " जीवन्नेव हि विद्वान्हर्षामर्षाभ्यां विमुच्यते इति ब्रह्मसाक्षात्कारपर्यन्तायां तत्त्वनिष्ठायामसमर्थास्ते निर्गुणब्रह्मतत्त्वोपास्त्या मुच्यन्ते तथाच पारम्पर्यसूत्रं 'स्मृतेश्च' इति अत्र हि "ब्रह्मणा सह ते सर्वे संप्राप्ते

प्रतिसंचरे । परस्यान्ते कृतात्मानःप्रविशन्ति परं पद" मिति निर्गुणब्रह्मतत्त्वोपासका महाप्रलये तत्रोत्पन्नसम्यग्धियो मुच्यमानेन ब्रह्मणा सह परम्पदं प्रविशन्तीत्यर्थः । तस्मात्सिद्धं केवलाद्ब्रह्मतत्त्वज्ञानान्मोक्ष इति । अत्र प्रमाणश्रुतयः सहस्रशः 'ज्ञानादेव तु कैवल्यं' 'कर्मणा बध्यते' 'न कर्मणा न प्रजया' इत्याद्याः संति विस्तरभयान्नेहोपन्यस्यन्ते विद्वद्भिरत्रानुसन्धेयानि । ननु तत्पदप्रतिपादितवेदान्तानां प्रामाण्यप्रयोजनत्वोपपत्तेर्ज्ञानविधिपरत्वे ज्ञानसाध्यस्य मोक्षस्यस्वर्गादेरिवानित्यत्वं प्रसज्येतअदृष्टजन्यभावकार्यस्यानित्यत्वनियमान्नचतदिष्टं सर्वे मोक्षवादिनो मोक्षं नित्यमभ्युपगच्छन्ति ततश्च सर्वतन्त्रविरोधः 'अनावृत्तिः शब्दा' दिति सूत्रविरोधश्चापि च मोक्षो नाम ब्रह्मभावो वाऽज्ञाननिवृत्तिर्वा सर्वथापि तस्य ज्ञानैकसाध्यत्वेन विधेयज्ञानजन्या पूर्वस्यानुपयोगित्वान्मोक्षस्योत्पत्त्याद्यसम्भवेन वाज्ञानविधेर्निरर्थकत्वप्रसंगादुत्पत्त्याद्यन्यतमस्य विधिफलत्वादभिव्यक्तिश्च प्रमाणजन्या श्रवणादिजन्या वा न सम्भवति ब्रह्मणो विधेयज्ञानविषयत्वायोगादिति चेन्न 'तत्त्वमसी' त्यादिमहावाक्यस्थतत्त्वंपदलक्ष्यार्थब्रह्मणो ज्ञानविषय-

तया तदनुसन्धानस्यैव यथार्थस्मरणतया विधानाद्विरोधाप्रसक्तेः । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधादि" ति सूत्रव्याख्यानावसरे उक्तलक्षणब्रह्मणोऽभिन्ननिमित्तोपादानत्वं समर्थितं तद्यथा-ब्रह्म तु मायोपहितं सत्प्रपञ्चस्योपाधिप्राधान्येनोपादानकारणं स्वप्राधान्येन च निमित्तकारणं च भवति तत्र श्रुतिप्रमाणं यथा "तदैक्षत बहुस्यां प्रजायेय" "जन्माद्यस्य यतः" इत्यस्मिन्नधिकरणे च ब्रह्मणस्तटस्थलक्षणप्रतिपादनपरे जगतस्तथा कारणतया निर्णीतमेतावता स्वरूपतटस्थलक्षणकं ब्रह्म जगतोऽभिन्ननिमित्तोपादानकारणतया प्रतिपादकप्रमाणभूतश्रुतौ "यथोर्णनाभिः सृजते गृह्यते च" इत्याद्युक्तयोर्णनाभ्यादेरभिन्ननिमित्तोपादानकारणदृष्टान्ततया प्रसिद्धत्वाल्लोके बहुश उपवर्णितं भवतीति विरम्यते ।

विस्तारितं श्रुतिशिरः प्रणवप्रमाणम् ।
कैवल्यकन्दपरिचिन्तनमद्वितीयम् ॥
वेदान्तशास्त्रमकरन्दचतुर्थभागे ।
संचिन्त्यतां सपदि सन्ततमन्तरंगे ॥ १ ॥

अम्बासमस्तजननी परदेवतासा ।
श्रीशारदामतिगतिप्रभव प्रभावा ॥
धन्यार्चिताङ्घ्रिकमला विमला जगत्याम् ।
वागीश्वरीविहित शास्त्रलताधिरूढा ॥ १ ॥

अद्वैतशङ्करजगद्गुरु शिष्यशिक्षाम् ।
पित्र्युद्भवप्रवर पुत्र निबन्धचेष्टाम् ॥
आत्मांशकत्व कथनार्थ तयामदीयाम् ।
जानन्तुतेऽत्र सुधियो न परोऽत्रहेतुः ॥ २ ॥

वेदोह्यनित्य इतिनो न चपौरुषेयः ।
मानं प्रसाध्य जगतां मन इन्द्रियंनो ॥
पूर्वं ततोऽत्र परमाणुमतं परास्तम् ।
वेदागमादिरहिता विहितं च तेषाम् ॥ ३ ॥

वेदान्तशास्त्रमकरन्द विरोधिनोये ।
चार्वाककापिलजिनादिनिरीश्वराद्याः ॥
साङ्ख्यप्रधान परिणाममतानियानि ।
नैय्यायिक प्रभृतयश्च जितानितानि ॥ ४ ॥

श्रुत्यामनर्थरचना न कदापियुक्ता ।
शिष्टस्मृतावपितथात्र महत्प्रसादात् ॥
गद्यप्रबन्धरचना श्रुतिभाष्यकारा ।
ध्वानं विसृज्यपदमप्यगतिंननीता ॥ ५ ॥
शास्त्रार्थ कौशलमहत्वमहोऽत्रकीर्तिम् ।
वाञ्छामिनैव हिममाप्यनधीत शास्त्रः ॥
वेदान्तशास्त्रमकरन्द विधौ समर्थः ।
आचार्यपादकरुणा किरणप्रभावात् ॥ ६ ॥
वेदान्तशास्त्रमकरन्दगतंसुगीतम् ।
नीतं समस्तनिगमागमसुप्रकाशम् ॥
नेदंविवाद पर पक्षस्वपक्षकृत्यम् ।
मृत्युञ्जयस्यपरितोपकरन्तथास्तु ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्ययोगीन्द्रवर्य श्रीआत्मानन्दसरस्वतीस्वामि-
भिर्विरचिते "वेदान्तशास्त्र मकरन्दे" श्रुतिसिद्धान्त चतुर्थ परिच्छेदः ।

